


# PULSE POLIO IMMUNIZATION




9th Dec. 1995 & 20th Jan. 1996

## DID YOU KNOW THAT...

- Polio not only cripples a child for life but can also cause death
- It is possible to eradicate polio
- 146 countries are now polio free
- 2/3 of the world's polio cases still come from India
- Last year, in India, 4,000 children reportedly fell a victim to polio. This number is only a fraction of the actual number of polio cases occurring in India which do not get reported.
- The only way to eradicate polio is to eliminate the disease-causing poliovirus, and the only way to do this is to give polio drops to every child in the country in the age of 0-3 years on a single day and repeat it after 4-6 weeks.
- India will save more than Rs. 50 crore every year if polio is eradicated
- Your parents probably remember smallpox. You don't. You will remember polio.
  **Your children should not.**

## WHAT CAN YOU DO?

- Spread the message of Pulse Polio Immunization
- Make sure that all children in your family and neighbourhood in 0-3 years age group, irrespective of whether or not they have been given polio drops earlier, are brought to the nearest vaccination centre for polio doses on 9th December 1995 and 20th January 1996.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | |
|---|---|---|
| अग्निशलाका | - | Matchstick |
| अञ्जलिः | - | Hollow created by cupped palms |
| अन्तरङ्गः | - | Cellar |
| अस्थीनि | - | Bones |
| आपणः | - | shop |
| आदिनम् | - | Whole day |
| आवंली | - | List |
| उत्पाटनार्थम् | - | To pluck |
| कांस्यम् | - | Bronze |
| कुञ्चिका | - | Key |
| कुसीदवणिक् | - | Money-lender |
| कृपणः | - | Miser |
| कोटरः | - | Hollow |
| खलीनम् | - | Reins |
| गृधः | - | Eagle |
| गोरिका | - | Snore |
| चिबुकम् | - | Chin |
| छिन्नवान् | - | Slashed |
| त्सरुः | - | Handle |
| दष्टवान् | - | Bit(v) |

| | | |
|---|---|---|
| धूम्रवर्णः | - | Grey colour |
| निःश्रेणिः | - | Ladder |
| नीडम् | - | Nest |
| नुन्नवान् | - | Pushed |
| पङ्गुः | - | Lame |
| पणवः | - | Drum |
| पदवृद्धिः | - | Promotion |
| परशुः | - | Axe |
| भषणम् | - | Barking |
| मधु | - | Honey |
| मेधावी | - | Clever |
| रजतसूत्रम् | - | Silver thread |
| लभ्येरन् | - | May be available |
| वज्रचूर्णम् | - | Cement |
| वप्रः | - | An elevation |
| शाकः | - | Vegetable |
| सीमा | - | Border |
| सूकरः | - | Pig |
| सोढवान् | - | Tolerated |
| ह्रदः | - | Whirlpool |

* * * * *

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!





# चन्दमामा

नवेम्बर् - १९९५

*

अन्तरङ्गम्




प्रतिकृतिमूल्यं रू. ५-००

वार्षिकं ग्राहकशुल्कं रू. ६०-००




# चन्दमामा

संस्थापकः -'चक्रपाणिः'  सञ्चालकः 'नागिरेड्डी'



## शिक्षणं मातृभाषया भवेत्

एषा वार्ता वाचकेषु आश्चर्यं जनयेत् यत् समग्रप्रपञ्चे व्यक्तित्वविकासार्थं, विविधविचाराणां विषयाणां च ज्ञानवृद्ध्यर्थं काञ्चित् विदेशीयभाषाम् अवलम्ब्य स्थितः देशः नाम भारतम् इति । भारते बहुषु विद्यालयेषु महाविद्यालयेषु च शिक्षणम् आंग्लमाध्यमेन एव भवति ।

दक्षिणकोरियाजनसंख्या ५-६ मिलियन्मात्रम् । तथापि तस्मिन् देशे मानवविकासार्थम् आवश्यकानाम् अत्युपयुक्तविषयाणां पुस्तकानि कोरियाभाषया एव मुद्रितानि सन्ति । भारतस्य जनसंख्या तु कोरियाजनसंख्यायाः अपेक्षया अपि अधिका अस्ति । तथापि कस्याम् अपि भाषायां व्यक्तिविकासार्थम् आवश्यकानां विषयाणां सङ्ग्रहः पर्याप्तमात्रेण नास्ति अत्र । तत्रापि विशेषतः विज्ञानतन्त्रज्ञानविषये मातृभाषायां विषयसङ्ग्रहस्य न्यूनता अनुभूयते ।

शिक्षणं मातृभाषया भवेत् उत न इत्यस्मिन् विषये बहोः कालात् चर्चा प्रचलति । गतेभ्यः केभ्यश्चित् वर्षेभ्यः विभिन्नविषयान् अधिकृत्य प्रादेशिकभाषया बहूनि पुस्तकानि मुद्रितानि, तानि पुस्तकानि प्रौढशालास्तरे उपयुक्तानि च । एतादृशाः बहवः प्रयत्नाः अन्ये अपि प्रवृत्ताः । तथापि महाविद्यालयस्तरे शिक्षणविषयाः सर्वेऽपि सर्वेषु अपि राज्येषु आंग्लमाध्यमेन एव बोध्यन्ते ।

प्राचीनकाले वेदस्य इतरश्रेष्ठविषयाणां च बोधनार्थं संस्कृतभाषा उपयुज्यते स्म । गच्छता कालेन सा राजास्थानमात्रसीमिता जाता । एतस्य परिणामतः सामान्याः जनाः बहवः औपचारिकशिक्षणात् वञ्चिताः भवन्ति स्म । तथैव शासनं, शिक्षणं च समुदायविशेषस्य स्वम् इव जातम् आसीत् । एतस्याः परिस्थितेः दुरुपयोगं स्वीकृत्य आंग्लजानाः शिक्षणमाध्यमत्वेन आंग्लभाषां व्यवहारपथे आनीतवन्तः ।



अस्माकं देशतः आंग्लजनानां निर्गमनानन्तरम् अपि वयम् आंग्लभाषाव्यामोहेन आंग्लमाध्यमशिक्षणपद्धतिम् एव अनुवर्तयन्तः स्मः । प्रादेशिकया भाषया व्यवहारः अध्ययनं च अपमानकरम् इति जनानां यः भावः अस्ति तस्य निवारणार्थं विद्यालयेषु महाविद्यालयेषु च प्रादेशिकी भाषा एव बोधनसाधनं स्यात् । तस्याः शब्दभाण्डारम् अपि पर्याप्तमात्रेण वर्धितं भवेत् ।

सम्पुटः - १२  नवेम्बर् - १९९५  सञ्चिका - ८

प्रतिकृतिमूल्यं रू. ५.००  *  वार्षिकं ग्राहकशुल्कं रू. ६०.००



BACK TO SCHOOL WITH CHELPARK

**CHELPARK RANGE OF PRODUCTS**

WAX CRAYONS, WATER COLOUR CAKES, PEN, PENCIL, INK, OIL PASTELS, MOPPLES COLOUR SET, WATER COLOUR SET.




CHELPARK COMPANY PVT. LTD.

## वार्ताविशेषः

# सप्तदशवर्षीयः वैद्यः



जूनमासस्य ३० तमे दिनाङ्के चिकागोनगरे अमेरिकावासिनः भारतीयाः वैद्याः काश्चित् सभाम् आयोजितवन्तः आसन् । सभायाः मुख्यातिथित्वेन आगतवान् आसीत् अमेरिका-देशस्य अध्यक्षः बिल्क्लिण्टन्वर्यः । सः स्वभाषणस्य आरम्भे 'डा। अम्बटि' इति यदा सम्बोधनं कृतवान्, तदा सप्तदशवर्षीयः युवकः कश्चित् उत्थितवान् । सभायाम् उपविष्टानां सर्वेषां दृष्टिः तस्य युवकस्य उपरि पतिता । अनन्तरं क्लिण्टन्-वर्यः हस्तम् उपरि कृत्वा अभिनन्दनपूर्वकं - 'प्रपञ्चस्य अल्पवयस्कः वैद्यः इति डा।। अम्बटिवर्यस्य परिचयः यदा जातः, तदनन्तरं मयि विनयशीलता उत्पन्ना अस्ति' इति उक्तवान् । तदा सभासदः सर्वे उच्चैः करताडनं कृतवन्तः । क्लिण्टन्वर्यः क्षणकालानन्तरं पुनः उक्तवान् - 'डा। अम्बटिवर्यस्य अग्रजः अपि स्ववार्धक्ये नवदशे वयसि एव वैद्यकीयपदवीं प्राप्तवान् अस्ति' इति । एतत् श्रुत्वा सभासदः उच्चैः हसितवन्तः ।

अमेरिकाध्यक्षात् अभिनन्दनं स्वीकृतवता डा।। अम्बटि बालमुरली-कृष्णवर्येण साधितः विजयः न सामान्यः । सः चतुर्थे वयसि एव गणितस्य क्लिष्टाः अपि समस्याः विनायासं परिहरति स्म । तस्य षष्ठे वयसि एव शालाधिकारिणः तं प्रथमस्तरशिक्षणविभागे योजितवन्तः । त्रिषु वर्षेषु सः पञ्चवारं पदवृद्धिं प्राप्तवान् । १९९१तमे वर्षे तन्नाम, तस्य १३ तमे वयसि सः जीवशास्त्रे बि.ए. पदवीं सम्पादितवान्, न्यूयार्क्विश्वविद्यालये 'अल्पवयस्कः पदवीधरः' इति ख्यातिं प्राप्तवान् च । अनन्तरं चत्वारि वर्षाणि यावत् सः मौण्ट् सिनाय् वैद्यकीयविद्यालये अध्ययनं कृत्वा वैद्यशास्त्रे पदवीं प्राप्तवान् ।

अम्बटि बालमुरली-कृष्णस्य पिता अम्बटि मोहनरावः वाणिज्य-तन्त्रज्ञाने डाक्टरेट् पदवीं प्राप्तवान् अस्ति । माता गोमती विद्याक्षेत्रे डाक्टरेट् पदवीं प्राप्तवती अस्ति । अग्रजः जयकृष्णः नेत्रचिकित्साविषये डाक्टरेट्पदवीं प्राप्तवान् अस्ति । इतःपूर्वम् इङ्ग्लेण्ड्देशस्य युवकः कश्चित् अल्पवयस्कः वैद्यः इति ख्यातिं प्राप्तवान् आसीत् । सः इटलिदेशस्य पेरुजिया-विश्वविद्यालये वैद्यशास्त्रे स्वस्य अष्टादशे वयसि एव पदवीं प्राप्तवान् आसीत् ।

बालमुरलीकृष्णः जयकृष्णः च षड्भ्यः वर्षेभ्यः पूर्वम् 'एयड्स्'विषयम् अधिकृत्य किञ्चन पुस्तकं प्रकटितवन्तौ । तस्य पुस्तकस्य द्वितीयमुद्रणार्थम् इदानीं सन्नाहः प्रचलन् अस्ति । न केवलं तत्, पर्यावरणरक्षणम् अधिकृत्य एताभ्यां लिखितस्य पुस्तकस्य मुद्रणं प्रचलत् अस्ति ।

'भवतोः कार्यम् अस्माकम् अभिमानस्य विषयः' इति वदन् बिल् क्लिण्टन्वर्यः तयोः सहोदरयोः श्लाघनं कृतवान् ।

अन्यः अपि विशेषः कश्चित् अस्ति - अम्बटिसहोदरयोः प्रशंसाकर्ता बिल् क्लिण्टन् अपि स्वयुवावस्थायां बहु साधितवान् अस्ति । सः स्वस्य २६तमे वयसि प्राध्यापकः जातः आसीत् । सः ३१तमे वयसि राज्यपालपदवीं ४६ तमे वयसि अमेरिकादेशस्य अध्यक्षपदवीं च प्राप्तवान् अस्ति ।



# राक्षसापणः

पूर्वं कस्मिंश्चित् राक्षसराज्ये धर्मानन्दनामकः कश्चित् राक्षसः आसीत्। राक्षसः चेत् अपि तस्मिन् सद्गुणाः एव आसन्। अतः अन्येषां राक्षसानां व्यवहाराः तस्मै न रोचन्ते स्म। वयसा ज्येष्ठाः राक्षसाः कदाचित् धर्मानन्दं बोधितवन्तः - ''हरिणः तृणानि खादति। किन्तु व्याघ्रः अन्यान् प्राणिनः खादति। एतस्मात् एवं न चिन्तनीयं यत् - हरिणः साधुः, व्याघ्रः क्रूरः इति। सर्वे स्वस्वभावानुगुणं जीवन्ति। एवमेव राक्षसाः अपि। राक्षसाः राक्षसव्यवहारम् एव कुर्युः, न तु मनुष्यव्यवहारम्'' इति।

राक्षसानां हितवचनं धर्मानन्दस्य इष्टाय न जातम्। ततः अतीव खिन्नः धर्मानन्दः दिनेषु अतीतेषु कृशः जातः। तदीयौ मातापितरौ पुत्रं वैद्याय दर्शितवन्तौ। वैद्यः धर्मानन्दं बहुधा परीक्ष्य उक्तवान् - ''राक्षसकुले जन्म प्राप्य अपि भवान् मनुष्यः इव व्यवहरन् अस्ति। एषः मानसिकरोगः अस्ति। अतः भवान् मानवानां राज्यं गत्वा, कानिचन दिनानि तत्र निवसतु। यावत् तत्र स्थास्यति, तावत् मासे एकः वा मनुष्यः भवता खादनीयः। यदा भवान् स्वराज्यं प्रत्यागन्तुम् इच्छां प्राप्स्यति, तदा भवान् मानसिकरोगात् मुक्तः जातः इत्यर्थः'' इति।

वैद्यस्य वचनं पुरस्कृत्य धर्मानन्दः किञ्चन मानवराज्यं गतवान्। कानिचन दिनानि यावत् तस्मिन् राज्ये अटन् बहून् विषयान् ज्ञातवान् च।

मनुष्याणां जीवनक्रमः तस्मै अरोचत। अतः तस्मिन् एव राज्ये शाश्वतं स्थातुम् इच्छन् सः सुन्दरयुवकरूपेण आत्मानं परिवर्तितवान्।

काचित् सौन्दर्यवती मानवकन्या

कदाचित् तेन दृष्टा । तस्याः सौन्दर्येण नितराम् आकृष्टः सः तां परिणेतुम् इष्टवान् ।

लतानामिका सा सुन्दरी विनयशीला चापि । किन्तु सा निर्धनकुलोत्पन्ना । ज्वरपीडितः तस्याः पिता शय्याम् आश्रितवान् आसीत् । माता अन्येषां गृहेषु स्वच्छतादिकं कार्यं कुर्वती किञ्चित् सम्पादयति स्म । अग्रजः विद्यावान् चेत् अपि निरुद्योगी आसीत् ।

कदाचित् लता देवालयं गच्छन्ती आसीत् । तदा धर्मानन्दः तस्याः अभिमुखम् आगतवान्, स्वकीयम् अनुरागं तां निवेदितवान् च ।

धर्मानन्दस्य वचनं श्रुत्वा लता आश्चर्यचकिता । सा मन्दहासं प्रकटय्य तम् उक्तवती - ''मम विवाहः मम इच्छानुसारं नास्ति । अस्मिन् ग्रामे अस्माकं दूरबन्धुः कश्चित् अस्ति । वर्षात् पूर्वं तस्य पत्नी दिवङ्गता । द्वितीयपत्नीत्वेन अहं परिणेतव्या इति तस्य इच्छा । सः मम पितरम् उक्तवान् अस्ति यत् भवतः पुत्रीं मह्यं दास्यति चेत् अहं भवन्तं परिणतवैद्यस्य समीपं नीत्वा चिकित्सां कारयिष्यामि इति, पुत्राय उद्योगं दापयिष्यामि इति च । किन्तु मम मातापितरौ एतं विवाहसम्बन्धं न इच्छतः । किन्तु दारिद्र्यकारणात् वयं तस्मात् ऋणं स्वीकृतवन्तः स्मः । अतः अस्माकं गृहम् इदानीम् तस्य अधीने



अस्ति । सप्ताहाभ्यन्तरे विवाहसम्बन्धे अस्माकम् अभिप्रायः वक्तव्यः । नो चेत् सः अस्मान् गृहात् निष्कासयिष्यति'' इति ।

''तस्मै दातव्यं धनम् अहं प्रत्यर्पयामि चेत् भवती मां वृणोति वा ?'' इति पृष्टवान् धर्मानन्दः ।

''पूर्वम् एव मया उक्तं खलु - मम विवाहः मम इच्छानुसारं नास्ति इति । एतद्विषये मम मातापितरौ प्रष्टुम् अर्हति भवान्'' इति उक्त्वा ततः निर्गतवती लता ।

धर्मानन्दः लतायाः मातापित्रोः समीपं गत्वा स्वकीयम् आशयं निवेदितवान् । किन्तु कुलगोत्ररहिताय धर्मानन्दाय कन्यां



दातुं न इष्टवन्तौ लतायाः मातापितरौ ।

पुनः कदाचित् देवालयं गच्छन्तीं लतां दृष्ट्वा धर्मानन्दः उक्तवान् - '' यदि भवती अनुमन्यते, तर्हि भवत्याः मातापितरौ अनुक्त्वा रहस्येन आवां विवाहितौ भवाव'' इति ।

''मातापितरौ अनुक्त्वा रहस्येन विवाहः मह्यं न रोचते । अहं यदि भाग्यवती स्याम्, तर्हि मम दूरबन्धुं कश्चित् राक्षसः मारयित्वा खादेत्'' इति उक्तवती लता ।

लतायाः एतत् वचनं श्रुतवतः धर्मानन्दस्य मनसि कश्चन उपायः स्फुरितः । 'लतां पीडयन्तं तस्याः दूरबन्धुं खादिष्यामि चेत् समस्या परिहृता भवेत्' इति विचिन्त्य सः रात्रिभोजनार्थं तं खादितवान् ।

एतस्मात् तात्कालिकरूपेण लतायाः विवाहसमस्या परिहृता जाता । मासः अतीतः । दिनेषु अतीतेषु मानवेषु प्रीतिः अधिका जायमाना आसीत् धर्मानन्दस्य । मनुष्यस्य खादनसमये सः नितरां खेदम् अनुभवति स्म ।

कदाचित् धर्मानन्दः रात्रिसमये खादनार्थं कञ्चित् संन्यासिनं गृहीतवान् ।

तदा संन्यासी धर्मानन्दम् उक्तवान् - ''मानवानां हितार्थं यथाशक्ति प्रयत्नं कुर्वन् अस्मि अहम् । बहवः स्वकष्टकाले मम हितवचनं श्रुत्वा इदानीं सुखेन जीवन्तः सन्ति । मम अनुपस्थित्या मानवानां महती हानिः भविष्यति । न केवलं तावत्, मम मारणेन भवान् पापयुक्तः भविष्यति'' इति ।

एतत् श्रुत्वा संन्यासिविषये धर्मानन्दस्य प्रीतिः उत्पन्ना । सः भक्त्या तं नमस्कृत्य प्रार्थितवान् यत् - माम् अपि हितवचनैः अनुगृह्णातु भवान् इति ।

तदा संन्यासी धर्मानन्दम् उद्दिश्य लतायाः अन्यस्य कस्यचित् दूरबन्धोः विषयम् उक्तवान् ।

लतायाः अन्यः दूरबन्धुः श्रीनिवासनामकः । तस्य पत्नी भवानी । तयोः अपत्यं न आसीत् । संन्यासी श्रीनिवासं तत्पत्नीं च बोधितवान् आसीत् - ''दत्तकपुत्ररूपेण कञ्चित् स्वीकुरुताम्'' इति । किन्तु तौ एतावत्पर्यन्तम् अपि

दत्तकपुत्ररूपेण कमपि न स्वीकृतवन्तौ आस्ताम् । संन्यासी एतत् सर्वं धर्मानन्दं निवेद्य उक्तवान् - "अस्मिन् नगरे वक्रबुद्धिनामकः कश्चित् वणिक् अस्ति । सः महान् धनिकः । किन्तु सः सर्वान् वञ्चयति । सामान्यः कोऽपि तेन सह स्पर्धितुं न शक्नोति । भवान् महाशक्तिमान् अस्ति । मन्त्रतन्त्रादिकं जानाति भवान् । भवान् अस्मिन् नगरे एकम् आपणम् उद्घाटयतु, यस्मिन् आपणे न्यूनमूल्येन वस्तूनि लभ्येरन् । तदा भवतः सामर्थ्यं सौजन्यं च जनैः ज्ञातं भवति । तादृशं भवन्तं श्रीनिवासः अवश्यं दत्तकपुत्ररूपेण स्वीकरिष्यति" इति ।

धर्मानन्दः संन्यासिनः वचनं श्रुत्वा अङ्गीकारपूर्वकं शिरः चालयन् विनयेन उक्तवान् - "स्वामिन् ! भवतः वचनम् अवश्यं पालयिष्यामि अहम् । किन्तु मम आहारार्थम् इदानीम् एकः मनुष्यः आवश्यकः" इति ।

"पार्श्वग्रामे वीरेशनामकः कश्चित् अलसः अस्ति । तं खादतु भवान्" इति उक्तवान् संन्यासी ।

तस्यां रात्रौ धर्मानन्दः वीरेशं खादितवान् । अनन्तरं किञ्चन उत्तमं स्थलं चित्वा तत्र सुन्दरम् आपणं निर्मितवान् । प्रातःकालाभ्यन्तरे निर्मितः आपणः सर्वेषाम् आकर्षणकेन्द्रं जातम् । दिनेषु अतीतेषु धर्मानन्दस्य आपणं प्रति एव ग्राहकाणाम् आगमनम् अधिकं जातम् ।



मासः अतीतः । तस्मिन् मासे खादनार्थं धर्मानन्देन कोऽपि न प्राप्तः । आहारस्वीकरणविषये अपि धर्मम् आचरतः धर्मानन्दस्य किं करणीयम् इति चिन्ता आरब्धा । एवं सति, 'धर्मानन्दनामकः कश्चित् आपणम् आरब्धवान् अस्ति । ग्राहकाः अधिकप्रमाणेन तस्य आपणम् एव गच्छन्तः सन्ति' इति वार्तां श्रुतवान् वक्रबुद्धिः । दिने दिने प्रवर्धमानं धर्मानन्दस्य वाणिज्यं दृष्ट्वा असूयया तप्तः वक्रबुद्धिः धर्मानन्दस्य मारणार्थं गजबलनामकं मल्लं प्रेषितवान् । किन्तु तं लीलया मारयित्वा खादितवान् धर्मानन्दः । अग्रिममासस्य आहारार्थं कः मनुष्यः



लभ्येत इति चिन्ता आरब्धा धर्मानन्दस्य । अत्रान्तरे श्रीनिवासः धर्मानन्दस्य समीपम् आगत्य - ''भवतः विषये बहुधा श्रुतवान् अस्मि अहम् । गुणवन्तं भवन्तं दत्तकपुत्ररूपेण स्वीकर्तुम् इच्छामि । एतत् भवता अनुमन्यते वा?'' इति पृष्टवान् ।

श्रीनिवासस्य एतस्मात् वचनात् अतीव सन्तुष्टः धर्मानन्दः तस्य दत्तकपुत्रत्वेन स्थितिम् अङ्गीकृतवान् । श्रीनिवासः शास्त्ररीत्या दत्तकस्वीकारकार्यक्रमं निर्वर्तितवान् ।

सप्ताहः अतीतः । धर्मानन्दः संन्यासिसमीपं गत्वा स्वसमस्याः उक्तवान् - '' स्वामिन् ! अहं मानवानां मध्ये एव जीवितुम् इच्छामि । किन्तु मासे एकः मनुष्यः मया खादनीयः एव । ये दुर्मार्गिणः अत्र आसन् तान्, खादितवान् अहम् । मम खादनेन दुर्मार्गिणः क्रमशः न्यूनाः भवन्तः सन्ति । एतादृशपरिस्थितौ मया किं करणीयम् इति मम महती चिन्ता अस्ति'' इति ।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान् - ''यदि भवान् शाश्वतं मनुष्यरूपेण एव तिष्ठति, तर्हि भवतः सर्वाः समस्याः परिहृताः भविष्यन्ति । तदर्थं कश्चन उपायः अस्ति । भवदीयं राक्षसरूपं स्वीकर्तुं कोऽपि मनुष्यः आवश्यकः'' इति ।

धर्मानन्दः ततः स्वकीयम् आपणं गत्वा 'स्वस्य राक्षसरूपं कः स्वीकुर्यात्' इति यावता चिन्तयन् आसीत्, तावता क्रोधाविष्टः वक्रबुद्धिः तत्र आगत्य - ''दशगजबलसमः कश्चित् मल्लः मया अत्र प्रेषितः आसीत् । किन्तु तस्य वार्ता एव नास्ति । मया बहवः मान्त्रिकाः विचरिताः एतद्विषये । ते उक्तवन्तः यत् - भवतः सहायकत्वेन कश्चित् राक्षसः अस्ति इति, तस्य कुतन्त्रेण मल्लः मृतः अस्ति इति च । इदानीं सः राक्षसः कुत्र अस्ति इति वदतु । क्षणाभ्यन्तरे तं मारयिष्यामि'' इति उक्तवान् ।

एतत् श्रुत्वा धर्मानन्दः उच्चैः हसन् - ''वक्रबुद्धिः इति भवतः नाम अन्वर्थम् एव अस्ति इति भाति मम । राक्षसः अत्र किमर्थं तिष्ठति ? सः राक्षसराज्ये

वसति'' इति उक्त्वा राक्षसराज्यविषयं वक्रबुद्धिम् उक्तवान् ।

एतस्मात् अतीव सन्तुष्टः वक्रबुद्धिः - ''तादृशराज्ये वासकरणं सौभाग्यम् इति चिन्तनीयम् । सकृत् मां तत्र प्रेषयति वा भवान् ?'' इति पृष्टवान् ।

''अस्तु । भवन्तं प्रेषयितुं शक्नोमि अहम् । किन्तु तस्मात् ममापि लाभः भवेत् खलु ! अतः भवदीयां समग्रां सम्पत्तिं मह्यं ददातु । भवान् महाशक्तिसम्पन्नः भूत्वा राक्षसराज्यं यथा प्रविशेत् तथा करिष्यामि अहम्'' इति उक्तवान् धर्मानन्दः ।

धर्मानन्दस्य वचनं श्रुत्वा वक्रबुद्धिः - 'अहं राक्षसशक्तीः प्राप्नोमि चेत् मदीयां सम्पत्तिं पुनः धर्मानन्दतः स्वाधीनीकर्तुं शक्नोमि । न केवलं तावत्, एतस्य राज्यस्य राजा भवितुं शक्नोमि' इति विचिन्त्य धर्मानन्दस्य वचनानुसारं समग्रां सम्पत्तिं तस्मै दत्तवान् ।

धर्मानन्दः वक्रबुद्धेः अङ्गुल्यां स्वस्य अङ्गुलीयकं धारितवान् । अपरक्षणे एव वक्रबुद्धिः अदृश्यः जातः ।

अनन्तरं धर्मानन्दः संन्यासिसमीपं गत्वा उक्तवान् - ''स्वामिन् ! महानुभावः भवान् सर्वं जानाति एव । मम यादृशः मानसिकरोगः अस्ति, तादृशेन रोगेण पीडिताः न भवन्ति राक्षसराज्ये स्थिताः राक्षसाः । एतादृशेन रोगेण पीडिताः चेत् एव ते राक्षसराज्यात् बहिः आगच्छन्ति । इदानीं यद्यपि मम अपूर्वशक्तयः नष्टाः, तथापि अहं यथापूर्वम् आपणं चालयन् जीवननिर्वहणं करिष्यामि । लतां परिणीय मानवानां मध्ये सुखेन जीविष्यामि'' इति ।

एतत् श्रुत्वा अतीव सन्तुष्टः संन्यासी धर्मानन्दम् आशिषा अनुगृहीतवान् । श्रीनिवासस्य दत्तकपुत्ररूपेण स्थितः धर्मानन्दः लतां परिणीय, तस्याः अग्रजाय स्वकीये आपणे एव उद्योगं दापितवान् । किन्तु धर्मानन्दस्य आपणः 'राक्षसापणः' इत्येव प्रसिद्धः जातः ।



# विना परिश्रमं सम्पादनम्

शिवपुरनामकं किञ्चन नगरम् । तत्र अरविन्दनामकः युवकः आसीत् । सः चिन्तयति स्म यत् अहम् अतीव बुद्धिमान् इति, अल्पपरिश्रमेण एव अधिकं सम्पादयामि इति च ।

कदाचित् तस्य गृहस्य कुञ्चिका नष्टा जाता । अन्यकुञ्चिकया तालस्य उद्घाटने परिणतं कञ्चित् कर्मकरम् आनीतवान् अरविन्दः । कर्मकरः अन्यकुञ्चिकया अरविन्दस्य गृहस्य तालम् उद्घाटितवान् । प्रतिफलरूपेण अरविन्दतः पञ्च रूप्यकाणि स्वीकृतवान् सः ।

कर्मकराय पञ्च रूप्यकाणि दत्त्वा अरविन्दः - 'निमेषद्वये कार्यं कृतं चेत् पञ्चरूप्यकाणां सम्पादनम् ! तन्नाम प्रतिघण्टं १५० रूप्यकाणि सम्पादयितुं शक्यते । धनसम्पादनार्थम् एषः एव सुलभोपायः' इति विचिन्त्य सः कर्मकरसमीपं गत्वा उक्तवान् - 'अन्यकुञ्चिकया तालस्य उद्घाटनं कथम् इति मां पाठयतु' इति ।

कर्मकरः एतत् अङ्गीकृत्य अरविन्दं स्वशिष्यत्वेन स्वीकृत्य मासद्वयाभ्यन्तरे सर्वं बोधितवान् । अपि च सः तम् उक्तवान् - ''अरविन्द ! एतया वृत्त्या यद्यपि धनसम्पादनं सुलभम्, किन्तु समस्याः बह्वः भवन्ति । अतः जागरूकता आश्रयणीया भवता'' इति ।

आत्मना ज्ञातया विद्यया अरविन्दः षण्मासाभ्यन्तरे प्रभूतं धनं सम्पादितवान् ।

कदाचित् रात्रिसमये द्वौ अरविन्दस्य गृहम् आगत्य - ''अस्माकं गृहस्य कुञ्चिका नष्टा अस्ति । कृपया भवान् आगत्य अन्यकुञ्चिकया द्वारम् उद्घाटयतु । एतानि दश रूप्यकाणि स्वीकरोतु'' इति उक्त्वा तस्मै दशरूप्यकाणि दत्तवन्तौ । ताभ्यां दत्तं धनं स्वीकृत्य अरविन्दः उत्साहेन ताभ्यां सह गत्वा तैः सूचितस्य गृहस्य द्वारम् उद्घाटितवान् । तस्मिन् एव समये तेन मार्गेण गच्छन्तः रक्षकभटाः तान् दृष्ट्वा सन्देहेन तत्र गतवन्तः । तेषु उभौ चोरौ इति अभिज्ञाय, ताभ्यां सह अरविन्दम् अपि न्यायाधिकारिसमीपं नीतवन्तः । अरविन्दः प्रवृत्तं सर्वं न्यायाधिकारिणं निवेदितवान् ।

तदा न्यायाधिकारी कोपेन अरविन्दं पश्यन् - ''रे मूर्ख ! चोरः कः, गृहस्वामी कः इति ज्ञातुम् अशक्तः भवान् एतत् कार्यं कर्तुं न योग्यः'' इति उक्त्वा भटानां द्वारा दश कशाताडनानि दत्त्वा तं प्रेषितवान् ।





# रूपधरस्य प्रवासः

## ३

[ट्राय्नगरतः स्वदेशं प्रति प्रस्थितः रूपधरः चण्डमारुतकारणात् मार्गभ्रष्टः सन् भाललोचनराक्षसानां द्वीपं प्राप्तवान् । सः द्वादशभिः अनुचरैः सह कस्यचित् भाललोचनस्य गुहायां बन्धी आसीत् । भाललोचनराक्षसः रूपधरस्य कांश्चन अनुचरान् दारुणं मारयित्वा भक्षितवान् । अनन्तरं रूपधरः राक्षसं युक्तिपूर्वकं नेत्रे घातयित्वा अनुचरैः सह ततः निर्गतवान् । पश्चात् तदीयाः नौकाः राक्षसद्वीपात् अग्रे प्रयाणम् अनुवर्तितवत्यः । अनन्तरम् ------]

रूपधरस्य नौकाः वेगेन गच्छन्त्यः 'महानौकाद्वीपं प्राप्तवत्यः । सः द्वीपः समुद्रे प्लवते इति कारणतः प्रसिद्धिं गतः आसीत् । द्वीपस्य उपरि अभेद्यं कांस्यदुर्गम् आसीत् । तस्य दुर्गस्य राजा चित्राश्वनामकः । दिक्पालकाः तस्य मित्राणि आसन् । चित्राश्वस्य षट् पुत्राः, षट् पुत्र्यः च आसन् । राजा चित्राश्वः रूपधरं, तदीयान् अनुचरान् च स्वागतीकृत्य सत्कृतवान् । सः सप्ताहं यावत् रूपधरं, तस्य अनुचरान् च स्वगृहे एव स्थापयित्वा तेषाम् आतिथ्यं कृतवान् । रूपधरसकाशात् चित्राश्वः ट्राय्युद्धविषये, युद्धे जयं प्राप्तवतां ग्रीक्वीराणां विषये च विस्तरेण ज्ञातवान् ।

सप्ताहानन्तरं रूपधरः चित्राश्वम् उद्दिश्य उक्तवान् - ''कति दिनानि भवताम् अतिथित्वेन स्थातुं शक्नुयाम वयम् ? अस्मान् प्रेषयतु भवान् । अपि च समुद्रमार्गेण सुदीर्घकालं यावत् प्रयाणकरणेन



अतीव श्रान्ताः स्मः वयम् । महत् कष्टम् अपि अनुभूतम् अस्माभिः । अतः इदानीम् अस्माकं सुखप्रयाणार्थं भवता यथाशक्ति साहाय्यं करणीयम् इति मम निवेदनम्'' इति ।

चित्राश्वः रूपधरस्य वचनम् अङ्गीकृतवान् ।

राजा चित्राश्वः वायुदेवस्य अनुग्रहेण वरं प्राप्तवान् आसीत् । सप्त पवनाः तस्य दासाः आसन् । सः एकं पवनं विहाय अवशिष्टान् षट् पवनान् एकस्मिन् चर्मस्यूते स्थापयित्वा बद्धवान् । अनन्तरं तं चर्मस्यूतं रूपधराय यच्छन् उक्तवान् - ''वत्स ! भवतः नौकाः विना विघ्नं भवतः देशं प्राप्नुयुः इति उद्देशेन मया एकं पवनं विहाय अन्ये पवनाः अस्मिन् चर्मस्यूते बद्धाः सन्ति । एतस्मात् भवतः प्रयाणं सुखकरं भविष्यति । गृहप्राप्तिपर्यन्तम् अपि चर्मस्यूते विद्यमानाः पवनाः उपरि यथा न आगच्छेयुः, तथा भवान् रक्षति चेत् कापि विपत्तिः न सम्भविष्यति'' इति ।

रूपधरः चित्राश्वाय कृतज्ञताः समर्प्य पवनयुक्तं चर्मस्यूतं स्वीकृत्य अनुचरैः सह नौकाद्वारा प्रयाणं कृतवान् ।

चित्राश्वस्य कथनानुसारं तेषां प्रयाणं विना विघ्नं प्राचलत् । नव दिनानि यावत् अहोरात्रं नौकाः वेगेन अग्रे गताः । दशमे दिने प्रातःकालसमये तैः इक्ष्वाकातीरं दृष्टम् । तीरे विद्यमानान् हिमपर्वतान् दृष्ट्वा रूपधरः स्वदेशम् अभिज्ञातवान् ।

स्वदेशस्य दर्शनात् रूपधरः तदीयाः अनुचराः च नितरां सन्तुष्टाः । ''केषुचित् एव निमेषेषु नौकाः तीरं प्राप्स्यन्ति । अनन्तरम् आनन्देन स्वगृहं प्रति गमनम्'' इति ते परस्परं वार्तालापं कुर्वन्ति स्म ।

'महानौका'द्वीपात् प्रस्थानानन्तरं नव दिनानि अपि रूपधरेण निद्रा एव न कृता आसीत् । पवनयुक्तं चर्मस्यूतं हस्तेन एव गृहीत्वा रक्षन् आसीत् सः । 'केषुचित् एव क्षणेषु गृहं प्राप्नोमि ' इति चिन्तयन्तं तं महती निद्रा बाधते स्म । ''यावत् नौकाः तीरं न प्राप्नुवन्ति तावत् क्षणं यावत् निद्रां करोमि'' इति विचिन्त्य रूपधरः नेत्रे

निमील्य निद्रितवान् ।

रूपधरस्य नेत्रनिमीलनस्य अनन्तरं तदीयेषु अनुचरेषु मन्दस्वरेण वार्तालापः आरब्धः ।

"तस्मिन् चर्मस्यूते किं स्यात्?" इति पृष्टवान् कश्चित् ।

"सुवर्णम् उपायनानि च स्युः?" इति उक्तवान् अपरः ।

तृतीयः उक्तवान् – "सर्वे अपि रूपधरस्य स्नेहिताः एव । सर्वे एतस्मै उपायनानि यच्छन्ति । अस्मभ्यं कोऽपि उपायनं न ददाति" इति ।

"एतेन रूपधरेण सह वयम् अपि गृहं त्यक्त्वा अत्र आगत्य युद्धं कृतवन्तः खलु! युद्धे लुण्ठितं सर्वम् अपि रूपधरः एव स्वीकृतवान् अस्ति । अस्मभ्यं किमपि न दत्तवान् एषः । अपि च जनाः एतस्मै उपायनानि अपि यच्छन्ति" इति उक्तवान् चतुर्थः ।

पञ्चमः उक्तवान् – "प्रथमं तावत् अस्मिन् चर्मस्यूते किम् अस्ति इति पश्याम" इति ।

सर्वे निर्णीतवन्तः यत् – चर्मस्यूते किम् अस्ति इति द्रष्टव्यम् इति ।

चर्मस्यूतः रजतसूत्रेण बद्धः आसीत् । रूपधरस्य अनुचराः महता कष्टेन रजतसूत्रं निष्कासितवन्तः । अनुक्षणं चर्मस्यूतात् कालवायुः महान्तं शब्दं कुर्वन् महता वेगेन बहिः आगतवान् । कालवायुकारणात् सर्वाः नौकाः कम्पमानाः जाताः । नौकायां



स्थिताः जनाः वृक्षाः इव पतितवन्तः ।

एतस्मात् कोलाहलात् रूपधरः जागरितः । किन्तु सः नेत्रे उन्मीलयितुं न शक्तः । चण्डमारुतः यावत् शान्तः, तावता रूपधरस्य नौकाः ततः प्रतिनिवृत्ताः सत्यः अन्यं कश्चित् द्वीपं प्राप्तवत्यः । दृष्टिगोचरीभूतात् अपि मातृदेशात् पुनः अपि दूरं गताः इत्यतः ते अतीव दुःखिताः अभवन् । रूपधरः तु नितरां खिन्नः । तथापि 'रोदनेन किमपि प्रयोजनं नास्ति' इति विचिन्त्य रूपधरः तस्य अनुचराः च तत्रैव पाकं कृत्वा भोजनं कृतवन्तः ।

अनन्तरं रूपधरः द्वाभ्याम् अनुचराभ्यां सह पुनः चित्राश्वस्य समीपं गतवान् । आगतं रूपधरं दृष्ट्वा आश्चर्यचकितः

चित्राश्वः - ''इतः निर्गताः भवन्तः सुखेन स्वदेशं प्राप्नुयुः इत्यतः मया साहाय्यं कृतम् आसीत् किल ! किमर्थं प्रत्यागतवान् भवान्?'' इति पृष्टवान् ।

तदा रूपधरः उक्तवान् - ''महाराज ! मम स्थितिं किमिति वदामि? नौकायां निद्रां सोढुम् अशक्तः अहं क्षणकालं यावत् सुप्तवान् । तावता मूर्खाः मम अनुचराः चर्मस्यूतम् उद्घाटितवन्तः । तस्मात् पवनः बहिः आगतः । शक्तिमान् भवान् पुनरपि साहाय्यं कृत्वा कृपया माम् अनुगृह्णातु'' इति ।

एतत् श्रुत्वा कोपाविष्टः चित्राश्वः - ''रे पापिष्ठ ! निर्गच्छतु इतः । देवताः भवद्विषये कुपिताः सन्ति । तादृशस्य भवतः किमपि साहाय्यं कर्तुं न इच्छामि अहम्'' इति वदन् निर्दयेन तं ततः प्रेषितवान् ।

रूपधरेण बहुधा चित्राश्वः प्रार्थितः चेदपि किमपि प्रयोजनं न जातम् । अनन्यगतिकः रूपधरः मौनं ततः निर्गतवान् ।

रूपधरस्य नौकाः पुनरपि स्वप्रयाणम् अनुवर्तितवत्यः । किन्तु रूपधरस्य तस्य अनुचराणां वा उत्साहः एव न आसीत् । वायुसाहाय्यं अपि न आसीत् । अतः नाविकानां हस्ताः श्रान्ताः । ते अत्यन्तम् असाहायस्थितिं प्राप्तवन्तः । विश्रान्तिं विना षट् दिनानि यावत् अहोरात्रं समुद्रे प्रयाणं कुर्वन्तः ते सप्तमे दिने किञ्चन तीरं प्राप्तवन्तः । सः उत्तरध्रुवप्रदेशः आसीत् । तस्मिन् प्रदेशे सप्ताहं यावत् दिवा भवति



स्म । सूर्यः अस्तं गच्छति चेदपि किञ्चित्कालानन्तरं पुनः उदेति स्म । सूर्यः कुत्र उदेति, कुत्र अस्तं गच्छति इति ज्ञातुम् एव कष्टम् आसीत् ।

रूपधरस्य नौकाः यं तीरप्रदेशं प्राप्तवत्यः, तत्समीपे पर्वतशिखरद्वयम् आसीत् । परस्परं समीपे एव स्थितयोः द्वयोः पर्वतयोः मध्ये एकस्याः नौकायाः गमनार्थं यावत् आवश्यकं तावदेव स्थलम् आसीत् । किन्तु तेन मार्गेण अग्रे गम्यते चेत् अपरस्मिन् पार्श्वे नद्याः आकारेण स्थितः विशालः समुद्रः दृश्यते । सः प्रदेशः नौकानिस्स्थानकम् अपि ।

रूपधरः स्वनौकाः तीरे स्थितायां महाशिलायां बध्द्वा अवशिष्टाः नौकाः नौकानिस्स्थानकं प्रति प्रेषितवान् । सः अनतिदूरे स्थितं पर्वतशिखरम् आरुह्य परितः अवलोकितवान् । कुत्रापि हरितायमानः प्रदेशः वृक्षः वा न दृष्टः तेन । किन्तु सुदूरे आकाशे धूमः दृष्टः तेन । तस्मात् 'एतस्मिन् प्रदेशे केऽपि मनुष्याः निवसन्ति' इति ज्ञात्वा रूपधरः उत्साहेन स्वानुचरान् उक्तवान् - ''यत्र धूमः दृश्यमानः अस्ति, तत्र गत्वा कीदृशाः जनाः तत्र वसन्ति इति ज्ञात्वा आगच्छन्तु भवन्तः'' इति ।

रूपधरस्य अनुचराः नायकस्य वचनम् अङ्गीकृत्य किञ्चिद्दूरं गतवन्तः । तावता कश्चन लघुमार्गः दृष्टः तैः । ते तेन एव मार्गेण अग्रे गतवन्तः । तत्र कानिचन गृहाणि दृष्टानि । कस्यचित् गृहस्य समीपे घटं जलेन पूरयन्ती बालिका दृष्टा तैः ।

ते तां बालिकाम् उद्दिश्य - ''एतस्य



राज्यस्य राजा कः? तस्य निवासः च कुत्र अस्ति? वयं तं द्रष्टुम् इच्छामः'' इति उक्तवन्तः।

सा बालिका तेषां प्रश्नस्य उत्तररूपेण अनतिदूरे दृश्यमानम् उन्नतं किञ्चन भवनं दर्शितवती। रूपधरस्य अनुचराः बालिकया दर्शितं भवनं गतवन्तः। भवनस्य प्रवेशसमये एव काचित् राक्षसस्त्री तैः दृष्टा। तस्याः दर्शनमात्रेण रूपधरस्य अनुचरेषु वैराग्यभावना उत्पन्ना।

सा राक्षसस्त्री तान् दृष्ट्वा अनुक्षणं पतिम् आनायितवती। तस्याः पतिः आगत्य रूपधरस्य अनुचरेषु कञ्चित् गृहीत्वा बलात् भूमौ घट्टयित्वा मारितवान्, पाकशालायां क्षिप्तवान् च। एतत् दृष्ट्वा इतरेषु अनुचरेषु भयात् कम्पनम् आरब्धम्। ते धावन्तः ततः स्वनौकासमीपं गतवन्तः। किन्तु तावता सः राक्षसः वीथीम् आगत्य उच्चस्वरेण सिंहगर्जनं कृतवान्। तस्य सिंहगर्जनं श्रुत्वा बहवः राक्षसाः कुतश्चित् आगतवन्तः, नौकानिस्स्थानकं परितः ये पर्वताः आसन्, तान् आरुह्य ततः नौकानां दिशि शिलाः क्षिप्तवन्तः च। ताः महाशिलाः मानवैः कष्टेन अपि उन्नेतुम् अशक्याः आसन्। राक्षसैः क्षिप्तानां शिलानां घट्टनेन नौकाः भग्नाः अभवन्। रूपधरस्य अनुचराः शिलानाम् अधः पतित्वा मृताः जाताः। राक्षसाः आनन्देन कोलाहलं कुर्वन्तः मृतान् रूपधरानुचरान् गृहीत्वा स्वस्वगृहं प्रति प्रस्थितवन्तः।

नौकानिस्स्थानके यत् दारुणं हननं प्रचलति स्म, तत् ज्ञात्वा रूपधरः स्वनौकायाः रज्जुं कर्तितवान्। अनन्तरं सः नौकानाविकान् उच्चस्वरेण उक्तवान् - ''बलात् नौकाः चालयन्तु। नो चेत् अत्रैव अस्माकं नाशः भविष्यति'' इति।

नाविकाः कष्टेन नौकाः चालयन्तः अग्रे गतवन्तः। रूपधरस्य नौकां विहाय इतराःसर्वाः नौकाः नष्टाः अभवन्। तासु स्थिताः अपि घोरं मरणं प्राप्तवन्तः।

(अनुवर्तते)



# र स वा र्ताः

## शङ्क्वाकारकाणि गृहाणि

ईजिप्ट्देशीयः शङ्क्वाकारक-स्मारकसमूहः प्रपञ्चस्य सप्तसु अद्भुतेषु अन्यतमः । राजकुटुम्बसदस्यानां शवानां रक्षणार्थं षड्भ्यः वर्षेभ्यः पूर्वम् एतानि निर्मितानि इति श्रूयते । एतेषां विशिष्टां निर्माणपद्धतिं दृष्ट्वा तन्त्रज्ञाः अपि चकिताः भवन्ति । एतानि भूमौ चतुरस्राकारकाणि



सन्ति । उपरि त्रिकोणाकारभित्तियुक्तानि भवन्ति । एतेषाम् अन्तः शवाः नष्टाः यथा न भवेयुः तथा स्थाप्यन्ते । इतरवस्तूनि यदि स्थाप्यन्ते, तर्हि तानि अपि नष्टानि न भवन्ति अत्र। शङ्क्वाकार-युतासु पेटिकासु शाकाः फलानि च सुरक्षितं स्थापयितुं शक्यन्ते इति निपुणाः चिन्तयन्तः सन्ति । शङ्क्वाकारकेषु गृहेषु वासः आरोग्यदृष्ट्या हितकरः इति केषाञ्चन अभिप्रायः । अग्रिमदिनेषु जनाः शङ्क्वाकारकाणि गृहाणि निर्माय वसन्ति चेत् नास्ति तत्र आश्चर्यम् ।

## उन्नततमं भवनम्

जपान्देशस्थायाः गृहनिर्माणसंस्थायाः ३७ निपुणाः निश्चितवन्तः सन्ति यत् चीनादेशस्य षाङ्घैनगरे ४७० मीटर् परिमितोन्नतं भवनं निर्मातव्यम् इति । ९५ अट्टालकम् एतत् भवनं मलेशियादेशे निर्मीयमाणस्य ४५२ मीटर्-उन्नतस्य भवनस्य अपेक्षया, अमेरिकादेशस्य चिकागोनगरे निर्मीयमाणस्य ४४३ मीटर्-उन्नतभवनस्य अपेक्षया च अपि उन्नतं भविष्यति । ८८२ मिलियन्-डालर्व्ययेन निर्मीयमाणस्य एतस्य षाङ्घैभवनस्य निर्माणकार्यं पञ्चषवर्षाभ्यन्तरे समाप्तिम् एष्यति ।

## दन्तशिखरम्

षाङ्घैनगरस्थेन याकिन्नामकेन दन्तवैद्येन, तस्य षड्भिः विद्यार्थिभिः च गतेभ्यः ३० वर्षेभ्यः रोगिणां मुखतः निष्कासिताः सामान्यतः अष्टाविंशति-सहस्राधिकाः (२८,०००) दन्ताः न क्षिप्ताः । अपि तु तान् दन्तान् सङ्गृह्य तैः सह चिक्कणताम् उपयुज्य २-५ मीटर्-उन्नतः वल्मीकः निर्मितः अस्ति तैः । विश्वस्तरीयोल्लेखसम्बन्धिनः अधिकारिणः केचन तत्र गत्वा तं वल्मीकं परिशील्य गतवन्तः सन्ति ।

## रब्बर्सेतुबन्धः

मध्यचीनादेशस्य हेनान्प्रदेशस्य नान्याङ्गनगरे ५००मी. वैशाल्ययुतः ३-५मी. उन्नतः च कश्चित् जलबन्धः रब्बर्द्रव्येण एव निर्मीयमाणः अस्ति । वायुना जलेन च पूर्णाः रब्बर्गोण्यः शिलानाम् अपेक्षया वज्रचूर्णानाम् अपेक्षया च दृढाः भवन्ति इति निर्मापकाः वदन्ति ।



# देशभक्तिः

परिश्रमः यावान् वा भवतु, उद्दिष्टं कार्यं साधनीयम् एव इति चिन्तयन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः बेतालः अवदत् - ''अये राजन्! भयजनके अस्मिन् श्मशाने महान्तं परिश्रमं वहन् भवान् महत् कष्टम् अनुभवन् अस्ति । एतावता अपि भवतः लक्ष्यं किं स्यात् इत्येव मया न ज्ञातम् । मयि सन्देहः उदेति यत् - भवान् एतादृशं परिश्रमं स्वनिमित्तं कुर्वन् नास्ति, अपि तु कस्यचित् स्वार्थिनः निमित्तं कुर्वन् अस्ति इति । कस्यचित् राज्यस्य राजा भवान् विवेकी लोकज्ञाननिपुणः च इत्यत्र नास्ति मम सन्देहः । तथापि महाज्ञानिनः विवेकिनः अपि कदाचित् मानसिक-दौर्बल्यकारणात् अविवेकेन व्यवहरन्ति । एतस्य निदर्शनार्थं सुन्दरराजनामकस्य

# वेतालकथा



राजगुरोः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

श्वेतद्वीपं परिपालयतः महाराजस्य एकमात्रं पुत्रः आसीत् । राजा राज्ञी च पुत्रम् अत्यन्तं वात्सल्येन पालयतः स्म ।

राजकुमारः स्वस्य षष्ठवर्षस्य जन्मदिनोत्सवदिने क्रीडार्थं वाटिकां गतः न प्रत्यागतः एव । राजभटैः बहुधा अन्विष्टः सः । तथापि राजकुमारः न प्राप्तः एव ।

श्वेतद्वीपस्य प्रतिवेशिराज्यं हरितद्वीपनामकम् । बहोः कालात् एतयोः राज्ययोः मध्ये द्वेषः आसीत् । किन्तु शक्तौ युक्तौ च राज्यद्वयम् अपि समबलयुतम् आसीत् इत्यतः तयोः मध्ये परस्परम् आक्रमणं न प्रचलति स्म ।

स्वपुत्रस्य अदर्शनात् श्वेतद्वीपस्य राज्ञि सन्देहः उत्पन्नः यत् - एतत् हरितद्वीपस्य राज्ञः कुतन्त्रं स्यात् इति । तस्य सन्देहस्य दृढीकरणाय इव अकस्मात् हरितद्वीपस्य सुन्दरराजनामकः राजगुरुः श्वेतद्वीपस्य समुद्रतीरे राजभटैः प्राप्तः ।

सुन्दरराजः ज्ञानी विवेकी च । सः पशुपक्षिणां भाषाः, तेषां व्यवहारादिकं च अवगच्छति स्म ।

हरितद्वीपस्य राजकुमारस्य पट्टाभिषेककार्यक्रमः निश्चितः आसीत् । मित्रराज्यानां महाराजेभ्यः पट्टाभिषेककार्यक्रमस्य आह्वानपत्रिकाः दातुं सुन्दरराजः हरितद्वीपतः प्रस्थितः आसीत् । किन्तु मध्येमार्गं चण्डमारुतकारणात् तदीया नौका मार्गभ्रष्टा जाता । तस्मात् सुन्दरराजः श्वेतद्वीपस्य समुद्रतीरं प्राप्तवान् आसीत् ।

श्वेतद्वीपस्य राजा बहुभिः प्रश्नैः सुन्दरराजस्य परीक्षां कृतवान् । तस्य उत्तरेण श्वेतद्वीपस्य राज्ञा ज्ञातं यत् - सुन्दरराजः राजकुमारस्य अदृश्यतां न जानाति इति । तथापि राजा सुन्दरराजस्य प्रतिगमनार्थम् अनुमतिं न दत्तवान् । अपि तु सः सकलविद्यापारङ्गताय सुन्दरराजाय स्वपुत्रस्य राजकुमारस्य अन्वेषणदायित्वं दत्तवान् ।

श्वेतद्वीपस्य राजकुमारः कुत्र स्यात्, केन प्रकारेण तस्य अन्वेषणं साध्यम् इति न

जानाति स्म सुन्दरराजः । किन्तु एतत् तु निश्चितं यत् - राजकुमारस्य अन्वेषणकार्यं साधितं चेत् एव स्वराज्यं प्रति गन्तुम् अनुमतिः प्राप्यते इति ।

सुन्दरराजः एवं यदा चिन्तयन् आसीत्, तदा समुद्रात् कश्चित् गृध्रः श्वेतद्वीपस्य दुर्गस्य दिशि एव आगतवान् । सुन्दरराजः गृध्रम् एव पश्यन् स्वकीयम् अङ्गुष्ठम् उन्नीय वायौ इतस्ततः चालयन् उच्चस्वरेण सरागम् अर्धघण्टां यावत् ध्वनिम् उत्पादितवान् । एतत् श्रुत्वा गृध्रः किमपि ज्ञातवान् इव दुर्गं परितः पञ्चषवारं भ्रमणं कृत्वा ततः वेगेन गत्वा अनतिदूरे स्थितायाः वाटिकायाः वटवृक्षे उपविष्टवान् । तत्क्षणम् एव तस्मिन् वृक्षे स्थिताः पक्षिणः कलरवम् आरब्धवन्तः ।

गृध्रस्य एतस्मात् व्यवहारात् सुन्दरराजः किमपि अवगतवान् इव तृप्त्या शिरः चालयन् ततः वाटिकां गतवान् । वाटिकां प्रति तस्य गमनेन पक्षिणां कलरवः स्थगितः अभवत् । वटवृक्षस्य शाखायां नीडस्य निर्माणं कुर्वन् आसीत् कश्चित् पक्षी । सः सुन्दरराजं दृष्ट्वा विचित्रस्वरेण शब्दं कुर्वन् ततः वृक्षस्य कोटरसमीपं गत्वा 'कीच् कीच्' इति शब्दम् अकरोत् । एतस्मात् अतीव सन्तुष्टः सुन्दरराजः करताडनेन स्वसन्तोषं प्रकटयन् वृक्षस्य कोटरसमीपं गतवान् ।

सुन्दरराजः कोटरं प्रविश्य किञ्चिद्दूरं गतवान् । तत्र अन्तरङ्गे सामान्यतः



पञ्चपादपरिमितोन्नतं मधुपात्रम् आसीत् । पात्रे प्लवमानं कन्दुकम् एकं सुन्दरराजेन दृष्टम् । 'राजकुमारेण वाटिकायां कन्दुकेन क्रीडनसमये कन्दुकं कोटरे पतितम् अभवत् । तत् अन्विष्यन् गतः राजकुमारः मधुपात्रम् आरूढवान् । तदा अकस्मात् मधुपात्रे पतितः सः तत्रैव निमग्नः' इति तर्कितवान् सुन्दरराजः ।

ततः सुन्दरराजः राजभवनं गत्वा एतां दुःखदायिनीं वार्तां राजानं निवेदितवान् । राजा भटानां द्वारा मधुपात्रतः राजकुमारं निष्कासितवान् । राजा पुत्राय राजकुमाराय राजोचितं वेषं धारयित्वा मञ्चस्य उपरि राजकुमारं शायितवान् ।

अनन्तरं सः सुन्दरराजम् उक्तवान् -



''अस्माभिः साधयितुम् अशक्यं कार्यं भवान् सुलभतया साधितवान् अस्ति । भवान् महाशक्तिशाली अस्ति । राजकुमारः मृतः इति तु अस्माकं दौर्भाग्यम् । किन्तु इदानीं राजकुमारस्य प्राणदानं भवता एव करणीयम्'' इति ।

एतत् श्रुत्वा कुपितः सुन्दरराजः - ''सर्वथा अशक्यम् एतत् । मनुष्यमात्रस्य जननमरणम् अत्यन्तं सहजम् । अहम् अपि मृतः भविष्यामि । भवन्तः अपि कालान्तरे मरणं प्राप्स्यन्ति एव । एवं सति मृतम् उज्जीवयितुं कस्य सामर्थ्यं स्यात्?'' इति पृष्टवान् ।

''एतद्विषये किं करणीयम् इति भवान् एव चिन्तयतु । यावत् मम पुत्रस्य उज्जीवनं न भविष्यति, तावत् भवान् इतः गन्तुं न शक्ष्यति । इतः भवतः बहिर्गमनं न तावत् सुलभम् । सर्वत्र रक्षकभटाः व्यवस्थापिताः सन्ति मया । यदि भवान् इतः पलायनार्थं प्रयत्नं करोति, तर्हि मम पुत्रस्य समीपे एव भवन्तं बन्धने स्थापयिष्यामि'' इति उक्त्वा राजा ततः गतवान् ।

राज्ञः अज्ञानं स्वार्थं च मनसा एव निन्दन् सुन्दरराजः तत्रैव कस्मिंश्चित् शिलासने उपविष्टवान् । तावता कुतश्चित् आगतौ द्वौ वानरौ झटिति उत्प्लुत्य वटवृक्षे उपविष्टवन्तौ । क्षणाभ्यन्तरे तयोः अन्यतरः वानरः कर्णकठोरं 'कीच्' कुर्वन् वृक्षशाखातः अधः पतितवान् । वृक्षशाखाम् आवृत्य स्थितः कृष्णसर्पः तं वानरं दष्टवान् आसीत् इत्यतः सः तथा पतितवान् आसीत् ।

अत्रान्तरे द्वितीयः वानरः वृक्षशाखातः अधः आगत्य निश्चलं पतितां प्रियतमां परीक्षितवान् । स्वप्रियतमा मृता इति ज्ञात्वा सः वानरः कोपेन वृक्षस्थं कृष्णसर्पं दृष्ट्वा बलात् स्वहस्तेन भूमौ घट्टयित्वा ततः वेगेन धावितवान् ।

एतत् सर्वम् अवलोकितवतः सुन्दरराजस्य मुखे मन्दहासः । सः शिलासनात् उत्थाय इतस्ततः भ्रमणम् आरब्धवान् ।

घण्टातः पूर्वं वेगेन धावन् गतः वानरः धावन् एव प्रत्यागतवान् । तस्य हस्ते

लघुसर्पाकारिका मूलिका आसीत् ।

वानरः तां मूलिकां भूमौ पतितायाः प्रियतमायाः शिरसि स्थापयित्वा मुखेन त्रिवारं वायुवीजनम् अकरोत् । अपरक्षणे एव सा वानरी नेत्रे उन्मील्य अङ्गभङ्गं कुर्वती उत्थितवती ।

तस्मिन् एव समये सुन्दरराजः वानरयोः समीपं गत्वा उच्चैः हुँकुर्वन् हस्तम् उपरि कृतवान् । एतस्मात् भीतौ वानरौ मूलिकां सुन्दरराजाय दत्त्वा ततः निर्गतवन्तौ ।

सुन्दरराजः तां मूलिकां राजकुमारस्य शिरसि संस्थाप्य मुखेन त्रिवारं वायुं वीजितवान् । अपरक्षणे एव राजकुमारः निद्रातः इव उत्थाय उपविष्टवान् । सुन्दरराजः 'एषा शुभवार्ता राज्ञे निवेदनीया' इति रक्षकभटान् उक्तवान् ।

रक्षकभटाः राजभवनं गत्वा महाराजं शुभवार्तां निवेदितवन्तः । एतस्मात् नितरां सन्तुष्टौ महाराजः राज्ञी च वाटिकां गत्वा वात्सल्येन पुत्रम् आलिङ्गितवन्तौ ।

पुत्रं राजकुमारम् उज्जीवितवते सुन्दरराजाय प्रभूतं धनं दत्त्वा तं वैभवेन सत्कृतवान् राजा ।

तदा सुन्दरराजः श्वेतद्वीपस्य राजानम् उक्तवान् - "महाराज ! अहं धनं न इच्छामि । कृपया यावच्छीघ्रं मां मम राज्यं प्रति प्रेषयतु" इति ।

सुन्दरराजस्य एतत् वचनम् अङ्गीकर्तुम् अनिच्छन् राजा राजा शिरः चालयन् - "इदानीम् एव भवन्तम् इतः प्रेषयितुं न इच्छामि अहम् । राजकुमारस्य अन्वेषकः अपि भवान् एव । प्राणदाता





अपि भवान् एव । अतः तस्य विद्याभ्यासदायित्वम् अपि भवतः एव । सकलविद्याः तं पाठयित्वा तम् अपि भवत्सदृशं मेधाविनं करोतु भवान् । अनन्तरं भवतः प्रेषणव्यवस्थां करिष्यामि अहम् '' इति उक्त्वा पुनः सुन्दरराजस्य वचनं श्रोतुम् अनिच्छन् ततः निर्गतवान् एव ।

एतस्मात् सुन्दरराजः अतीव खिन्नः । किन्तु राजाज्ञायाः पालनं विना उपायान्तरं न आसीत् तस्य । अतः सः राजकुमारं स्वशिष्यत्वेन अङ्गीकृत्य आत्मना ज्ञाताः सर्वाः विद्याः राजकुमारं बोधितवान् ।

शिष्यस्य राजकुमारस्य विद्याभ्याससमाप्त्यनन्तरं सुन्दरराजः कदाचित् सभायां राजकुमारस्य परीक्षाम् आयोजितवान् । सर्वासु परीक्षासु राजकुमारः उत्तीर्णः जातः । तत्र राजकुमारस्य बुद्धिमत्तां दृष्ट्वा सभासदः सर्वे अतीव आश्चर्यचकिताः । महाराजः तु अतीव सन्तुष्टः ।

अनन्तरदिने एव राजा सुन्दरराजस्य प्रयाणार्थं नौकां सज्जीकृतवान् । सुन्दरराजाय बहूनि उपायनानि दत्तवान् । पित्रा सह आत्मानं प्रेषयितुं समुद्रतीरम् आगतं राजकुमारम् उद्दिश्य सुन्दरराजः - ''प्रमुखं मन्त्रम् एकं भवन्तं पाठयितुं विस्मृतवान् अहम् । तं मन्त्रम् इदानीं भवन्तं बोधयिष्यामि अहम् । मया कथ्यमानं मन्त्रं जपता भवता अञ्जलिपूर्णं जलं स्वीकृत्य अन्यस्मिन् अञ्जलौ स्थापनीयम् । अनन्तरं मम नौकायाः अदर्शनपर्यन्तम् अपि मुखस्य एकाग्रता न लोपनीया '' इति उक्त्वा तस्य कर्णे मन्त्रम् उपदिष्टवान् ।

गुरुणा यथा उक्तं, तथैव आचरितवान् राजकुमारः । अनन्तरं राजकुमारः पित्रा सह अन्तःपुरं गत्वा गुरुणा सुन्दरराजेन प्रस्थानसमये उपदिष्टं मन्त्रं पितरं वक्तुम् इच्छन् मुखम् उद्घाटितवान् । किन्तु राजकुमारेण सः मन्त्रः विस्मृतः आसीत् । न केवलं मन्त्रः, अपि तु सुन्दरराजेन बोधिताः सर्वाः विद्याः अपि विस्मृताः आसन् राजकुमारेण ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन्! सुन्दरराजस्य व्यवहारः

नीचः इति भाति खलु! यतः प्राणदानपूर्वकं श्वेतद्वीपस्य राजकुमारं सर्वाः विद्याः बोधितवान् सुन्दरराजः एव। किन्तु सः एव सुन्दरराजः स्वराज्यं प्रति प्रस्थानसमये नूतनं प्रमुखं च कश्चित् मन्त्रम् उपदिशामि इति राजकुमारम् उक्त्वा तं किमर्थं वञ्चितवान्? पाठिताः सर्वाः विद्याः किमर्थं प्रतिस्वीकृतवान् सः? शिष्यः गुरुम् एव पराजयेत इति भीत्या तथा कृतवान् वा सः? भाविनि काले राजकुमारात् आत्मनः विपत्तिः सम्भवेत् इति भयेन वा? महाज्ञानी विवेकी च सन् अपि सुन्दरराजः स्वकीयेन एतादृशेन व्यवहारेण अविवेकी सञ्जातः खलु! एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''हरितद्वीपस्य राजगुरोः सुन्दरराजस्य, श्वेतद्वीपस्य राजकुमारविषये अभिमानः स्यात् इति कथनस्य प्रसक्तिः एव नास्ति। यतः सः अभिमानेन राजकुमारं न बोधितवान्। अपि तु श्वेतद्वीपस्य राज्ञः दुराग्रहकारणतः तस्मात् राज्यात् स्वस्य मुक्तिप्राप्त्यर्थं च सः राजकुमारं बोधितवान्। विवेकी कोऽपि शत्रुदेशीयम् अपूर्वाः विद्याः बोधयितुं न इच्छति। तदेव तस्य देशभक्तिं द्योतयति। किन्तु श्वेतद्वीपात् आत्मनः रक्षणार्थं सुन्दरराजेन अनिवार्यतया अपूर्वाः अपि विद्याः बोधनीयाः आपतिताः। व्यक्तिः, कुटुम्बम्, समाजः, देशः, इत्यादिवलयेषु व्यक्तेः वलयः न विशालः। देशः व्यक्तेः अपेक्षया विशालः। स्वदेशस्य गौरवं मनसि निधाय देशभक्तः सुन्दरराजः तथा व्यवहृतवान्। एतस्मात् सिद्धं यत् तेन अविवेकिता आचरिता इति कथनं न युक्तम् इति'' इति।

एवं राज्ञः मौनभङ्गः यदा जातः, तदा शवान्तर्गतः बेतालः ततः अदृश्यः भूत्वा यथापूर्वं श्मशानस्थस्य वृक्षस्य शाखाम् अवलम्बितवान्।



# सन्देहः

सोमपुरस्य भूस्वामी कदाचित् नगरं गत्वा स्वव्यवहारान् समाप्य स्वकीयस्य अश्वस्य उपरि उपविश्य ग्रामं प्रति प्रयाणार्थं प्रस्थितः । मध्येमार्गं सः कञ्चित् तटाकं गत्वा अश्वं जलं पाययित्वा, तटाकसमीपस्थस्य वृक्षस्य अधः कञ्चित् कालं विश्रम्य ततः गन्तुम् उद्युक्तः । तदा तेन एव मार्गेण अश्वारूढः सन् कुसीदवणिक् वेङ्कटेशः आगतवान् ।

भूस्वामी सङ्कोचशीलः । किन्तु वेङ्कटेशः वाचालः । भूस्वामी वाचालेन वेङ्कटेशेन सह प्रयाणं न इच्छति। किन्तु स्वग्रामीणः एव सः इत्यतः तेन सह गमनं निराकर्तुम् अपि न शक्नोति सः । अतः तस्मात् कथं मुक्तिः प्राप्तव्या इति चिन्ता आरब्धा भूस्वामिनः ।

किन्तु वेङ्कटेशः भूस्वामिनः मनस्थितिं न जानाति । सः तस्मिन् दिने विपण्याम् आत्मना केन प्रकारेण वृद्धिसङ्ग्रहणं कृतम् इति भूस्वामिनं विवृतवान् । भूस्वामी कञ्चित् कालं वेङ्कटेशस्य कथनं मौनं सोढवान् । तावति काले भूस्वामिनः मनसि कश्चन उपायः स्फुरितः ।

भूस्वामी वेङ्कटेशम् उक्तवान् - ''वेङ्कटेश ! भवान् मया सह स्पर्धार्थं सिद्धः किम् ? रामस्मरणं कुर्वद्भ्याम् आवाभ्याम् अस्माकं ग्रामस्य रामालयपर्यन्तं गन्तव्यम् । भवान् एतं नियमं पालयति चेत् मदीयम् अश्वं भवते दास्यामि'' इति ।

''आम् ! अहं स्पर्धार्थम् सिद्धः अस्मि'' इति उक्त्वा वेङ्कटेशः मौनम् आश्रितवान् । भूस्वामी वेङ्कटेशः च मौनेन एव ग्रामसीमापर्यन्तं गतवन्तौ । तावता मौनं स्थितस्य वेङ्कटेशस्य मनसि कश्चन सन्देहः उत्पन्नः। सः स्वसन्देहं परिहर्तुम् इच्छन् भूस्वामिनं पृष्टवान् - ''भवता केवलःअश्वः दीयते, उत तदीयं खलीनम् अपि?'' इति ।



# दक्षिणभारतीयानि दृढानि दुर्गाणि - २

रचना - मीरा उग्रा * चित्राणि - अमिता चवान्

त्रयोदशे शतके मार्कोपोलोवर्यः अस्माकं देशस्य सन्दर्शनं कृतवान् । तदा काकतीयसाम्राज्यं वैभवस्थितौ आसीत् । वरङ्गल् तस्य राजधानी आसीत् । सः वरङ्गल्दुर्गं रमणीयतया वर्णितवान् अस्ति । राज्ञी रुद्रम्मादेवी रक्षणार्थं दुर्गं परितः दृढं भवनं निर्मितवती ।

मूल्ययुतानां वज्राणां उत्पादने प्रसिद्धिं गतस्य माङ्कल्नामकनगरस्य समीपे रुद्रम्मादेवी अन्यत् किञ्चन दुर्गं निर्मितवती ।

१५१८ तमे वर्षे माङ्कल्नगरे कुतुब् उल् मुल्क् सुल्तान् कुलीवर्यः कुतुब्षाहीवंशं स्थापितवान् । सः तत्रत्यं पुरातनदुर्गं समीकृत्य नूतनानि कानिचन भवनानि निर्माय 'गोल्कोण्ड' इति तस्य नगरस्य नामकरणं कृतवान् । गोल्कोण्डदुर्गस्य किञ्चन वैशिष्ट्यम् आसीत् । ४०० पादपरिमितस्य उन्नतस्य भवनस्य शिखरात् पर्वतात् अधः स्थितां भूमिं प्रति सन्देशप्रेषणार्थं काचित् विशिष्टा व्यवस्था कल्पिता आसीत् । एकत्र क्रियमाणः शब्दः क्षणाभ्यन्तरे अपरत्र प्राप्नोति स्म । पर्वतशिखरस्थस्य भवनस्य समीपे स्थितः रक्षकभटः दूरात् आगच्छतः शत्रून् अभिज्ञाय करताडनं करोति स्म । पर्वतात् अधः भूमौ स्थिताः द्वारपालकाः तं करताडनशब्दं श्रुत्वा दुर्गस्य द्वारपिधानं कुर्वन्ति स्म । जलव्यवस्थार्थं मृत्तिकया निर्मिताः नलिकाः भित्तौ योजिताः इति यत् तत् एतस्य दुर्गस्य वैशिष्ट्यम् आसीत् ।

गोल्कोण्डदुर्गम्
बालाहिसार् पर्वतस्य उपरि अस्ति



पर्वतशिखरे स्थितं बालाहिसार् महति घर्मकाले अपि शीतलं यथा स्यात् तथा निर्मितम् आसीत् ।
दुर्गस्य अन्तः पर्याप्तमात्रेण नलिकाः आसन् । दुर्गस्य अन्तः एव धान्यानां वर्धनम् अपि शक्यम् आसीत् । एतस्मात् कारणात् प्रबलम् आक्रमणम् अपि सोढुं सामर्थ्यम् आसीत् एतस्य दुर्गस्य ।

कदाचित् रात्रिसमये अन्धकारे कश्चित् शत्रुसैनिकः दुर्गस्य भित्तिम् आरोढुं यत्नं कृतवान् । एतत् ज्ञात्वा शुनकः भषणम् आरब्धवान् । । तदा रक्षकभटाः शत्रुसैनिकेन भित्तेः आरोहणार्थम् उपयुक्तां निःश्रेणिं निष्कासितवन्तः । तस्मात् शत्रुसैनिकः अधः स्थिते खाते



पतित्वा मृतः जातः । शत्रोः आगमनं सूचितवन्तं शुनकं रत्नाभरणैः अलङ्कृतवन्तः दुर्गस्य अधिकारिणः । किन्तु चतुर्णां मासानाम् अनन्तरं दुर्गस्य केनचित् अधिकारिणा द्रोहः आचरितः । तस्मात् दुर्गं शत्रुभिः स्वायत्तीकृतम् अभवत् । दुर्गस्य ईशान्यदिशि स्थितायाः रक्षकभित्तेः समीपे मोगलाः दुर्गस्य विस्तारणं कृत्वा वृत्ताकारकान् नव रक्षकस्थावरान् निर्मितवन्तः सन्ति । गोल्कोण्डस्य परिपालकाः निजामाः 'उल्मुल्क्' इति आहूयन्ते स्म । प्रपञ्चप्रख्यातं कोहिनूरवज्रं गोल्कोण्डसमीपस्थे वज्रखनौ प्राप्तम् ।

दक्षिणभारतस्य प्राचीनतमेषु दुर्गेषु प्रमुखम् अन्यतमं च अस्ति जिञ्जीदुर्गम् । एतत् त्रिकोनाकारकस्य पर्वतस्य उपरि अस्ति । तटाकतः मृण्नलिकानां द्वारा दुर्गस्य जलव्यवस्था

क्रियते स्म । अभेद्यम् एतत् दुर्गं मोगल-सैनिकानाम् आक्रमणम् अष्ट वर्षाणि यावत् सोढवत् । विजयनगरराजानः वास्तुनिपुणानां केषाञ्चित् युरोपजनानां सहकारेण वेलूरुदुर्गं निर्मितवन्तः । एतत् दुर्गं परितः दृढा रक्षकभित्तिः आसीत् । परितः स्थिते गभीरायां विशालायां च परिखायां बहवः मकराः भवन्ति स्म । १८५७ तमे वर्षे



**जिञ्जीदुर्गम् । दक्षिणभागे विद्यमानं राज्ञीनां वासस्थानम्**

प्रवृत्तात् सुप्रसिद्धात् कर्मकरविद्रोहात् पूर्वम् एव, तन्नाम १८०६ तमवर्षस्य जुलैमासे, वेलूरुदुर्गे किञ्चन प्रतिभटनं प्रवृत्तम् । १५०० कर्मकराः तत्रत्यान् २८० ब्रिटिष्सैनिकान् गृहीत्वा बन्धने स्थापितवन्तः आसन् ।



श्रीरङ्गपत्तनस्य तिसृषु दिशासु अपि कावेरी नदी प्रवहति । अतः एतत् कस्यचन द्वीपस्य दुर्गम् इति वक्तुं शक्यते । चतुर्थदिशि दृढं रक्षकभित्तिद्वयम्, कृष्णशिलाभिः निर्मिता गभीरा परिखा च अस्ति । परिखायाः जलप्रमाणस्य रक्षणार्थं योग्या व्यवस्था कृता अस्ति अत्र ।

नवमे शतके अस्मिन् द्वीपे रङ्गनाथस्य आलयः निर्मितः । अतः एव एतत् श्रीरङ्गपत्तननाम्ना प्रसिद्धिम् अवाप्नोत् । साहसिनः हैदर्-अली टिप्पुसुल्तानस्य कारणात् एतत् इतिहासे प्रामुख्यं प्राप्नोत् । वज्रचूर्णेन एव निर्मितस्य दरिया-दौलत् नामकस्य एतस्य टिप्पुसुल्तानभवनस्य भित्तिचित्राणि अतीव रमणीयानि आसन् । तदीयम् अपरं भवनं लाल्महल् । तत् भवनं १७९९ तमवर्षस्य मेमासस्य ४ दिनाङ्के प्रवृत्ते युद्धे ब्रिटिष्सैनिकाः नाशितवन्तः । तस्मिन् युद्धे टिप्पुमहाशयः अपि वीरमरणं प्राप्तवान् । तस्य दुर्गस्य शिलाः गतस्य इतिहासस्य साक्षिरूपेण स्थिताः सन्ति ।



हैदर्अली





# अरिष्टगृहम्

कश्चित् मध्यवयस्कः प्रयाणिकः सूर्यास्तसमये केनचित् अरण्यमार्गेण गच्छन् आसीत् । तस्य मुखे महान् आतङ्कः दृश्यते स्म । सः पुनः पुनः परितः पश्यन् स्वगतं किमपि वदति स्म ।

तावता कश्चित् वृद्धः उच्चैः रोदनं कुर्वन् तस्य अभिमुखम् आगतः । एतत् दृष्ट्वा प्रयाणिकः वृद्धं पृष्टवान् - ''भवतः दुःखस्य कारणं किम्?'' इति ।

वृद्धः कोपेन - ''मम दुःखस्य कारणं श्रुत्वा भवान् किं करोति? किं भवान् मम दुःखस्य परिहारं करोति?'' इति पृष्टवान् ।

तदा प्रयाणिकः उक्तवान् - ''हासस्य कारणं न कोऽपि पृच्छति । यतः तत् सहजम् । किन्तु रोदनम् असहजम् । अतः रोदनस्य कारणं किम् इति प्रश्नः अपि सहजः एव'' इति ।

एतत् श्रुत्वा वृद्धः क्रोधेन उक्तवान् - ''वयसा मत्तः कनिष्ठः अस्ति भवान् । अतः मां मा उपदिशतु भवान् । अस्मद्ग्रामीणः महेन्द्राचार्यः उक्तवान् अस्ति - ''भवान् इतोऽपि षट्वर्षाणि जीवति'' इति । किन्तु अत्रत्याः केचन मूर्खाः मां वदन्ति - ''भवान् एकमासात् अधिकं न जीवति'' इति । एतस्य सर्वस्य कारणम् अरिष्टगृहस्य प्रवेशः'' इति ।

''अरिष्टगृहम् ! कुत्र अस्ति तत्? अन्धकारः जातः खलु ! अद्य रात्रौ कुत्रापि स्थातव्यं मया'' इति उक्तवान् प्रयाणिकः ।

''इतोऽपि किञ्चित् अग्रे गच्छतु भवान् । तत्र दक्षिणतः गम्यते चेत् अरिष्टगृहं दृश्यते'' इति उक्त्वा सः वृद्धः रोदनं कुर्वन् ततः वेगेन गतवान् ।

प्रयाणिकः ततः अग्रे गत्वा दक्षिणतः गतवान् । तत्र तेन हरितायमानानाम् उन्नतानां वृक्षाणां मध्ये पुरातनं किञ्चन गृहं

दृष्टम् । तत् एव अरिष्टगृहं स्यात् इति तर्कितवान् सः तस्यां रात्रौ अत्रैव वासः करणीयः इति विचिन्त्य तद्गृहसमीपं गतवान्, द्वारं ताडितवान् च ।

तद्गृहस्य मुख्यद्वारं पुत्तिकाभिः खादितं सत् विकृतं जातम् आसीत् । किञ्चित्कालानन्तरं द्वारं 'किर्' इति शब्दं कुर्वत् उद्घाटितम् अभवत् । केनचित् वामनेन द्वारम् उद्घाटितम् आसीत् ।

''अद्य रात्रौ अहम् अस्मिन् गृहे स्थातुं शक्नोमि वा?'' इति वामनं पृष्टवान् प्रयाणिकः ।

''अत्र आश्रयप्राप्त्यर्थम् अनुमतिः प्रष्टव्या नास्ति । प्रयाणिकानां निमित्तम् एव निर्जने अस्मिन् अरण्ये सुन्दरम् एतत् गृहं निर्मितम् अस्ति'' इति उक्तवान् वामनः ।

प्रयाणिकः गृहस्य अन्तः गतवान् । तत्र चत्वारः वामनाः वातायनेषु दीपान् स्थापयन्तः आसन् । तेषां समीपं गतेन तेन प्रयाणिकेन ज्ञातं यत् 'ते न तैलदीपाः, अपि तु प्रकाशमानाः मणयः' इति ।

प्रकाशमानान् मणीन् दृष्ट्वा आश्चर्येण प्रयाणिकः उक्तवान् - ''महत् आश्चर्यम्'' इति ।

तदा वामनः प्रयाणिकम् उद्दिश्य - ''जीवनम् एव आश्चर्यदायकम् । मानवाः कदाचित् एतस्मात् जीवनवैचित्र्यात् मुक्तिं प्राप्तुम् अशक्ताः नाशं प्राप्नुवन्ति । सर्वस्य अपि दैवसङ्कल्पः एव प्रधानः'' इति उक्त्वा उच्चैः हसन् उक्तवान् - ''यावन्ति दिनानि भवान् इच्छति तावन्ति दिनानि भवान्



अस्मिन् गृहे निरातङ्कं स्थातुं शक्नोति । किन्तु भवता कोऽपि प्रश्नः न करणीयः । अट्टे स्थितं सुवर्णद्वारं न उद्घाटनीयम्'' इति ।

''भवतु । किन्तु एतद्गृहस्य स्वामी .....'' इति किमपि प्रष्टुम् उद्युक्तः प्रयाणिकः वामनेन उक्तं स्मरन् मौनम् आश्रितवान् ।

''पूर्वम् एव मया सूचितं खलु - 'प्रश्नकरणं निषिद्धम्' इति । माम् अनुसरतु भवान्'' इति वदन् वामनः अग्रे गतवान् ।

प्रयाणिकः उक्तवान् - 'मया स्नानं करणीयम्' इति । अनुक्षणं ते वामनाः सुगन्धजलयुक्तं तटाकं सज्जीकृतवन्तः प्रयाणिकस्य स्नानार्थम् ।

स्नानानन्तरं प्रयाणिकस्य बुभुक्षा आरब्धा । अन्तः विशाला भोजनशाला आसीत् । तत्र बहूनि पात्राणि आवरणसहितानि आसन् ।

प्रयाणिकाय वामनाः भोजनं परिवेषितवन्तः । भोजनसमये प्रयाणिकस्य मनसि विविधाः प्रश्नाः उत्पद्यन्ते स्म । किन्तु तस्य भावम् अवगत्य वामनाः 'प्रश्नः निषिद्धः' इति सङ्केतेन तं स्मारितवन्तः, न तु सन्देहान् परिहृतवन्तः ।

विशाले कस्मिंश्चित् प्रकोष्ठे प्रयाणिकस्य शयनार्थं मञ्चं स्थापयित्वा, तदुपरि शय्यां प्रसारितवन्तः वामनाः । तेषु कश्चित् वामनः वातायनस्थां जवनिकाम् अपसारितवान् । वातायनात् सुगन्धः आगच्छति स्म । कौमुदी प्रकाशमाना आसीत् ।

इन्द्रभवनसदृशम् अपि एतत् गृहम्





अरिष्टगृहम् इति मार्गे मिलितेन वृद्धेन किमर्थम् उक्तं स्यात् इति बहुधा चिन्तनेन अपि न ज्ञातवान् प्रयाणिकः ।

प्रातःकालः जातः । स्नानं विशेषभोजनं च व्यवस्थापितम् आसीत् वामनैः । किन्तु सम्भाषणार्थम् अवकाशः एव न आसीत् इत्यतः प्रयाणिकस्य महती जामिता उत्पन्ना । सः सायङ्कालपर्यन्तम् अपि तद्गृहस्य षोडशप्रकोष्ठेषु इतस्ततः अटन् कालं यापितवान् ।

सायङ्कालानन्तरं प्रयाणिकः अट्टम् आरुह्य गतवान् । अट्टे एकः एव प्रकोष्ठः आसीत् । तस्य प्रकोष्ठस्य द्वारं सुवर्णेन निर्मितं सत् प्रकाशमानम् आसीत् ।

प्रकोष्ठस्य द्वारम् एव एतावत् सुन्दरम् अस्ति । तर्हि एतस्य अन्तर्भागः कियान् सुन्दरः स्यात् इति चिन्तितवान् प्रयाणिकः । किन्तु तत्प्रकोष्ठस्य द्वारं न उद्घाटनीयम् इति वामनैः सूचितम् आसीत् । द्वारम् उद्घाट्य न दृष्टं चेत् प्रयाणिकस्य रात्रौ निद्रा न आगच्छति । 'यत्किमपि भवतु' इति विचिन्त्य प्रयाणिकः धैर्येण प्रकोष्ठस्य सुवर्णद्वारं मन्दम् उद्घाटितवान् । अत्याश्चर्यं नाम प्रकोष्ठस्य अन्तः भूमिः अमृतशिलाभिः निर्मिता आसीत् । अतीव प्रकाशमाना च आसीत् । भित्तयः सुवर्णशिलाभिः निर्मिताः आसन् । तस्मात् प्रकोष्ठात् अधः गमनार्थं सोपानानि आसन् । प्रयाणिकः मन्दं पदं स्थापयन् सोपानानां द्वारा अधः अवतीर्णः ।

अपरक्षणे एव कुतश्चित् कश्चित् राक्षसकाकः प्रयाणिकस्य शिरसि ताडितवान् । कश्चित् मार्जारः 'म्याँव्' इति शब्दं कुर्वन् प्रयाणिकस्य उरसि एव लङ्घनं कृतवान् । कश्चित् उलूकः उच्चैः तस्य कर्णे एव शब्दम् अकरोत् । एतस्मात् भीतस्य प्रयाणिकस्य शरीरे स्वेदः उत्पन्नः । सः ततः प्रतिगन्तुम् उद्युक्तः ।

तावता ''रे मूर्ख ! सावधानं शृणोतु। विंशतिवर्षाणाम् अनन्तरम् अस्मिन् एव दिने भवतः मरणं भविष्यति'' इति स्वरः श्रुतः प्रयाणिकेन ।

एतत् श्रुत्वा प्रयाणिकः आनन्देन सोपानानि आरुह्य सुवर्णद्वारयुक्तं प्रकोष्ठम्

आगतवान् । तत्र पञ्च वामनाः अपि परस्परं स्कन्धेषु हस्तं स्थापयित्वा मन्दस्वरेण वार्तालापं कुर्वन्तः आसन् ।

प्रयाणिकः आनन्देन पृष्टवान् - "भवन्तः सर्वे किमर्थम् अत्र मिलितवन्तः सन्ति?" इति ।

वामनाः तं विचित्रदृष्ट्या पश्यन्तः उक्तवन्तः - "आत्मनः मृत्युं ज्ञात्वा अपि भवान् दुःखम् अनुभवन् नास्ति, अपि तु आनन्दम् अनुभवन् अस्ति इति यत् तत् अस्मासु आश्चर्यं जनयति" इति ।

"दुःखं किमर्थम्? मम मृत्युसमयं ज्ञात्वा अहम् अतीव सन्तुष्टः अस्मि" इति उक्तवान् प्रयाणिकः ।

"बहूनां वर्षाणाम् अनन्तरं विचित्रमनुष्यः भवान् अस्माभिः दृष्टः । एषः विचारः अस्माकं नायकः निवेदनीयः । इतःपरम् अस्मिन् अरिष्टगृहे स्थातव्यं नास्ति अस्माभिः" इति वदन्तः ते वामनाः अदृश्यतां गताः ।

अपरक्षणे एव अरिष्टगृहम् अपि अदृश्यतां गतम् । प्रयाणिकः वृक्षाणां मध्ये स्थितवान् आसीत् । सः आनन्दाश्रूणि स्रावयन् स्वगतम् उक्तवान् - "आम्! कोऽपि मानवः स्वमरणं ज्ञात्वा निश्चिन्ततया जीवितुं न शक्नोति । मरणविषयं ज्ञात्वा अपि मादृशाः सन्तोषम् अनुभवन्ति । किन्तु एतादृशाः विरलाः" इति ।

किञ्चित्कालानन्तरं सः प्रयाणिकः हृदयरोगेण पीडितः जातः । वैद्यः तं परीक्ष्य उक्तवान् - 'एषः षण्मासान् केवलं जीवति' इति । वैद्यस्य वचनश्रवणात् कौटुम्बिकजीवनात् विरक्तः सः पत्नीपुत्रान् परित्यज्य ग्रामेषु अरण्येषु च अटन् कालं यापयति स्म । किन्तु षण्मासानन्तरं किं, वर्षानन्तरम् अपि तस्य मरणं न जातम् । तदा सः विंशतिवर्षाणाम् अनन्तरं भवतः मरणं भविष्यति इति अरिष्टगृहे श्रुतं वचनं स्मरन् धैर्यं आत्मविश्वासं च प्राप्तवान् ।

ततः सः वामनेभ्यः मनसा एव कृतज्ञताः समर्प्य स्वकीयाम् इष्टदेवतां स्मरन् स्वग्रामं गतवान् ।





# स्वभावपरिवर्तनम्

पाचकः सोमनाथः रुचिकरं पाकं करोति स्म। किन्तु सः शीघ्रकोपी आसीत्। अतः सामान्यतः कोऽपि पाककार्यार्थं तं न आह्वयति स्म। सोमनाथस्य पिता भीमः तावत् रुचिकरं पाकं न करोति स्म। तथापि सर्वे तम् एव आह्वयन्ति स्म पाककार्यार्थम्।

तस्मिन् ग्रामे राधानाथनामकः कृषिकः आसीत्। तस्य पुत्रः राजाश्रये उद्योगं प्राप्तवान्। अतः तदीयाः बान्धवाः मित्राणि च सानुरोधम् उक्तवन्तः यत् - मधुरभोजनं दातव्यम् इति। राधानाथः भोजनव्यवस्थां कृतवान्, पाककार्यार्थं भीमम् आहूतवान् च। किन्तु भीमः अकस्मात् ज्वरेण पीडितः अभवत्। तस्मात् राधानाथः पाकार्थं सोमनाथम् आहूतवान्।

सोमनाथः पाकशालां प्रविश्य पात्राणि अपर्याप्तानि, वस्तूनि उत्तमानि न सन्ति, काष्ठानि सम्यक् न ज्वलन्ति इति वदन् राधानाथस्य निन्दनम् आरब्धवान्। सोमनाथस्य स्वभावं पूर्वम् एव जानाति स्म राधानाथः। अतः सः तेन क्रियमाणान् आरोपान् मौनं सोढवान्।

राधानाथः गौरववान् पुरुषः। कदापि सः अन्यान् न निन्दति स्म, न वा कलहं करोति स्म। किन्तु परिस्थितिः अनिवार्या इत्यतः सः सोमनाथस्य निन्दनं सोढवान्। नो चेत् भोजनसमारम्भः सन्तोषदायकः न भवति इति राधानाथः जानाति।

सोमनाथः पाककरणसमये जुगुप्सा-भावेन राधानाथम् उक्तवान् - 'भवान् कृपणः' इति।

तदा राधानाथः विनयेन उक्तवान् - ''स्वामिन्! भवतः पित्रा कृतायाः आवल्याः अनुसारं मया वस्तूनि

आनायितानि । इदानीं यत्किमपि इच्छति चेत् वदतु । आनाययामि अहम् । किं वृथा निन्दनेन?'' इति ।

तदा सोमनाथः उक्तवान् - ''एषः मम स्वभावः । यदि भवतः इच्छा नास्ति तर्हि अहम् इदानीम् एव गमिष्यामि'' इति ।

अनन्तरं राधानाथः सोमनाथं किमपि न उक्तवान् । अपि तु सः उपायेन तस्य द्वारा सर्वाणि कार्याणि कारितवान् ।

पाकः अतीव रुचिकरः आसीत् । आगताः अतिथयः रुचिकरेण पाकेन सन्तुष्टाः तस्य प्रशंसां कृतवन्तः । राधानाथः पूर्वं निश्चितस्य अपेक्षया अपि अधिकम् एव धनं सोमनाथाय दत्वा प्रेषितवान् ।



कानिचन वर्षाणि अतीतानि । भीमः दिवङ्गतः । तस्मात् सोमनाथस्य जीवनयापनं कष्टाय जातम् । पाककार्यं कृत्वा जीवितुं सः इच्छति चेत् अपि तस्य स्वभावं ज्ञात्वा कोऽपि तं न आह्वयति स्म ।

एवं सति सोमनाथः कदाचित् राधानाथस्य गृहं गत्वा - ''स्वामिन् ! भवतः गृहे पाचकस्य आवश्यकता अस्ति इति विषयः ज्ञातः मया । पाककार्यार्थम् अहम् आगच्छामि वा?'' इति पृष्टवान् ।

राधानाथः क्षणकालं विचिन्त्य उक्तवान् - ''मम पत्नी अस्वस्था अस्ति इत्यतः कानिचन दिनानि यावत् पाचकस्य आवश्यकता तु अस्ति मम । किन्तु अधिकं वेतनं दातुं न शक्नोमि अहम् । भवान् भूस्वामिनः गृहे पाचकत्वेन तिष्ठति चेत् अधिकं वेतनं प्राप्नुयात् । अतः तत्र गच्छतु भवान्'' इति ।

तदा सोमनाथः उक्तवान् - ''भूस्वामिनः गृहे अपि पाचकस्य आवश्यकता अस्ति इति मया ज्ञातम् अस्ति । किन्तु तत्र दोषाः सम्भवन्ति चेत् कठोरदण्डनं भवति इति श्रुतवान् अस्मि । अतः तत्र गन्तुं भयम् अनुभवामि अहम्'' इति ।

''दोषाः कृताः चेत् सर्वत्रापि कठोरदण्डनं भवति एव । अतः दोषाः न करणीयाः'' इति उक्तवान् राधानाथः ।

''किन्तु मम वाचालस्वभावः अस्ति । एतादृशः स्वभावः भूस्वामिनः गृहे कष्टाय भवति'' इति उक्तवान् सोमनाथः ।

एतत् श्रुत्वा राधानाथः क्षणं विचिन्त्य - ''भूस्वामी अतीव सज्जनः अस्ति । सः विना कारणं कमपि न निन्दति । किन्तु मम तु तर्जनस्वभावः अस्ति । आदिनम् अहं तर्जयन् एव भवामि । भवान् मम तर्जनं सहते किम्?'' इति पृष्टवान् ।

राधानाथस्य वचनात् आश्चर्यचकितः सोमनाथः उक्तवान् - ''भवतः तर्जनस्वभावः अस्ति इत्यस्मिन् विषये मम विश्वासः नास्ति । यतः पूर्वं भवता आयोजितस्य भोजनसमारम्भस्य दिने मम निन्दनं भवान् मौनं सोढवान् । भोजनसमारम्भं प्रति आगताः सर्वे भवतः सहनां प्रशंसितवन्तः'' इति ।

तदा राधानाथः उक्तवान् - ''तदा भवतः आवश्यकता अनिवार्या आसीत् मम । अतः भवतः वाचालस्वभावं निन्दनं च मौनं सोढवान् अहम् । किन्तु इदानीं भवतः आवश्यकता नास्ति मम । अतः अहं निन्दनं श्रोतुं न इच्छामि । मम तर्जनं सोढुं यदि भवतः सामर्थ्यम् अस्ति, तर्हि अस्माकं गृहे पाचकत्वेन स्थातुम् अर्हति भवान् । अन्यथा भवान् अन्यत्र गन्तुम् अर्हति'' इति ।

राधानाथस्य वचनं श्रुत्वा सोमनाथः दुःखं निरोद्धुम् अशक्नुवन् तं नमस्कृत्य उक्तवान् - ''स्वामिन् ! मूर्खः अहम् अद्यपर्यन्तम् अपि इतरेषां सौजन्यं धर्मबुद्धिं च न ज्ञातवान् आसम् । मम दोषम् इदानीं ज्ञातवान् अहम् । मम मूर्खतां दृष्ट्वा अपि भवान् मां न तर्जितवान्, अपि तु हितवचनैः मां बोधितवान् । मां पाचकत्वेन भवान् न स्वीकरोति चेत् अपि चिन्ता नास्ति मम । किन्तु भवदीयम् उदारगुणं कदापि न विस्मरामि अहम्'' इति ।

सोमनाथस्य स्वभावे परिवर्तनं जातम् इति ज्ञात्वा अतीव सन्तुष्टः राधानाथः तं स्वगृहे पाचकत्वेन नियोजितवान् । तस्मात् दिनात् आरभ्य सोमनाथः विनयेन व्यवहरन् उत्तमः पाचकः इति ख्यातिं प्राप्तवान् ।





# महाभारतम्

ततः विदुरस्य निर्गमनानन्तरं दुर्योधनः पितुः समीपम् आगत्य उक्तवान् - "तात ! अयं विदुरः सदा भवता सह तिष्ठति । तस्मात् मम मनसि आतङ्कः जायते । अतः मम विचारः अवश्यं भवतः सकाशे निवेदनीयः इति कारणतः आगतवान् अहम् । विदुरः सर्वदा अस्माकं शत्रूणां पाण्डवानां प्रशंसां करोति । वयं तु शत्रूणां हानिम् एव इच्छामः खलु ! तदर्थम् अस्माभिः कश्चन उपायः चिन्तनीयः" इति ।

तदा धृतराष्ट्रः उक्तवान् - "वत्स ! मम भवतः च उद्देशः समानः एव खलु ! विदुरः पाण्डवान् प्रशंसति चेत् अपि तस्मिन् क्षणे अहं तस्य वचनम् अङ्गीकरोमि । यतः ईर्ष्या न प्रदर्शनीया । पाण्डवानां विषये भवता कर्णेन च मिलित्वा किमपि चिन्तितम् अस्ति वा?" इति पृष्टवान् ।

"पाण्डवाः इदानीं द्रुपदस्य जामातरः जाताः सन्ति इत्यतः ते दृढाः जाताः सन्ति । अतः द्रुपदस्य पाण्डवानां च मध्ये द्वेषः उत्पादनीयः । पाञ्चालदेशात् पाण्डवाः बहिः प्रेषणीयाः" इति उक्तवान् दुर्योधनः ।

सः पुनः अपि उक्तवान् - "द्रौपद्याः पञ्च पतयः सन्ति इत्यतः तस्याः पाण्डवानां च मध्ये असमाधानम् उत्पादनीयम् । तदर्थं समर्था काचित् वञ्चिका अपेक्षिता । एताः योजनाः यदि कार्यपथे आनीयन्ते, तर्हि पाण्डवाः चिन्तयेयुः यत् पाञ्चालं त्यक्त्वा हस्तिनापुरं प्रति गन्तव्यम् इति । तस्मिन्



समये कैश्चित् पाण्डवानां समीपं गत्वा हस्तिनापुरजीवनक्रमः सुन्दरः अस्ति इति हस्तिनापुरस्य वर्णनं करणीयम् । अपि च पाण्डवेषु बलवत्तमः भीमः एव । रहस्येन भीमं मारयाम वयम् । भीमस्य मरणं यदि भवति, तर्हि अर्जुनस्य मारणं न कष्टाय । कर्णः एव अर्जुनं मारयिष्यति । अपि च भीमः नास्ति चेत् अवशिष्टाः चत्वारः अस्माकं दासाः भविष्यन्ति'' इति ।

तावता तत्र आगतः कर्णः दुर्योधनस्य कथनं श्रुत्वा उक्तवान् - '' भवतः चिन्तनानुगुणं किमपि न भविष्यति । तावत् सुलभं न तत् । महाशूरान् पाण्डवान् द्रुपदः सुलभतया त्यजेत् वा? अत्यन्तं हीनस्थौ स्थितान् पाण्डवान् एव द्रौपदी परिणीतवती । इदानीं तु तेषां स्थितिः उत्तमा एव अस्ति । एवं सति किं द्रौपदी पाण्डवेभ्यः दूरं गच्छेत्? अतः भवता चिन्तितः उपायः प्रयोजनाय न भवति । अन्यच्च भवान् वदन् अस्ति यत् रहस्येन भीमं मारयिष्यामि इति । एतावत्पर्यन्तं तादृशाः कति प्रयत्नाः विफलाः न जाताः अस्माकम्? हस्तिनापुरे प्रभूता सम्पत्तिः अस्ति इति कथितं चेत् किं ते तस्मिन् विषये विश्वासं कुर्युः? पाण्डवाः न मुग्धाः, अपि तु अतीव चतुराः ते । साम-दान-भेदोपायैः अपि तान् वशीकर्तुं न शक्नुमः वयम् । सम्प्रति अस्माभिः दण्डोपायः आश्रयणीयः । अस्माकं सैन्यं तेषां सैन्यस्य अपेक्षया अपि महत् अस्ति । युद्धं नाम यादवाः मागधाः इत्यादयः तेषां साहाय्यम् आचरन्ति एव । अतः पाण्डवानां साहाय्यार्थं तेषाम् आगमनात् पूर्वम् अस्माभिः आक्रमणं कृत्वा ते नाशनीयाः । अत्र धर्माधर्मयोः प्रश्नः एव नास्ति'' इति ।

कर्णस्य एतत् वचनं श्रुत्वा धृतराष्ट्रः दुर्योधनम् उक्तवान् - ''कर्णेन उक्तं युक्तम् एव अस्ति । किन्तु एतद्विषये भीष्म-द्रोणविदुरादीनाम् अभिप्रायं पृच्छाम'' इति ।

ततः तैः भीष्मः द्रोणः विदुरः च आहूताः । ते आगत्य धृतराष्ट्रतः सर्वं विषयं ज्ञातवन्तः ।

भीष्मः स्वाभिप्रायम् उक्तवान् - ''मम

दृष्ट्वा पाण्डवाः दुर्योधनादयः च समानाः एव । वंशपरम्परागते अस्मिन् राज्ये पाण्डवानाम् अपि अर्धं राज्यम् अस्ति । अतः पाण्डवान् आहूय राज्ये तेषां यः भागः अस्ति, तस्य दानं न्यायसम्मतम् । यदि एवं न क्रियते, तर्हि भवताम् अपकीर्तिः भविष्यति । दुर्योधन ! एतावत्पर्यन्तं भवान् दुर्मार्गम् आश्रित्य पाण्डवान् बहुधा पीडितवान् अस्ति । तथापि पाण्डवानां कापि हानिः न जाता । पाण्डवाः मात्रा कुन्त्या सह लाक्षागृहे मरणं प्राप्तवन्तः इति वार्तां श्रुत्वा अतीव खिन्नः अहं कस्मै अपि मुखं दर्शयितुं न इच्छामि स्म । किन्तु ते जीवन्ति इत्यतः भवतः मानः रक्षितः अभवत् । इतःपरं वा सत्कार्याणि कुर्वन् सुखेन जीवतु भवान्'' इति ।



अनन्तरं द्रोणः उक्तवान् - ''भीष्मस्य कथनं युक्तम् अस्ति । राज्ये पाण्डवानां यः भागः अस्ति, सः अवश्यं दातव्यः । द्रुपदाय, तस्य पुत्राय, कुन्तीदेव्यै, पाण्डवेभ्यः, द्रौपद्यै च वस्त्राभरणानि उपायनरूपेण प्रेषयन्तु । तानि उपायनानि स्वीकृत्य दुःशासनः विकर्णः वा काम्पिल्यनगरं गच्छतु । यः काम्पिल्यनगरं गच्छति, तेन पाण्डवैः सह स्नेहेन वार्तालापं कृत्वा ते हस्तिनापुरं प्रति आह्वातव्याः, आनेतव्याः च । हस्तिनापुरं प्रति पाण्डवानाम् आगमनार्थं द्रुपदः अङ्गीकारणीयः'' इति ।

अनुक्षणं कर्णः धृतराष्ट्रम् उक्तवान् - ''राजन् ! एतौ वृद्धौ भीष्मद्रोणौ सदा अस्माकं शत्रून् प्रशंसतः । अस्माकम् अभिवृद्धिं न इच्छतः एतौ । अतः एतयोः वचनं मा पुरस्करोतु भवान्'' इति ।

कर्णस्य एतस्मात् वचनात् कुपितः द्रोणः - ''पाण्डवानां विषये भवतः पूर्वाग्रहः अस्ति इत्यतः अस्मान् किमर्थम् आक्षिपति भवान्? सम्प्रति कौरवाणां हितं मनसि निधाय एव अस्माभिः एवम् उक्तम् । मम भीष्मस्य च कथनानुसारं यदि न प्रचलति, तर्हि कौरवाः महत् कष्टम् अनुभविष्यन्ति'' इति उक्तवान् ।

तदा विदुरः धृतराष्ट्रम् उद्दिश्य उक्तवान् - ''महाराज ! भीष्मद्रोणाभ्यां यत् उक्तं तत् भवतां हिताय एव भविष्यति ।



किन्तु कर्णः एतत् अङ्गीकर्तुं न सिद्धः । यः कोऽपि यत्किमपि वदतु नाम । भीष्मद्रोणाभ्याम् ऋते नान्यः हितचिन्तकः अस्ति भवतः । एतयोः ज्येष्ठयोः हितवचनश्रवणात् भवतः शुभम् एव भविष्यति । एतयोः पक्षपातबुद्धिः नास्ति । भवतः विषये, भवत्पुत्राणां विषये च द्वेषासूयाविष्टाः बहवः सन्ति । तादृशानाम् अभिप्रायं शृणोति चेत् भवतः हानिः एव भविष्यति । 'विनाशकाले विपरीतबुद्धिः इति ज्येष्ठाः कथयन्ति । अतः विवेकेन व्यवहरणीयं भवता । पाण्डवैः सह युद्धं न तावत् सुलभम् । अपि च कृष्णस्य सहकारः अस्ति पाण्डवानाम् । भीमार्जुनौ महापराक्रमशीलौ । साम-दान-भेदोपायैः साधयितुम् अशक्यं दण्डोपायेन अपि साधयितुं न शक्यते । हस्तिनापुरस्य जनाः पाण्डवानां दर्शने उत्सुकाः सन्ति । अतः तान् अत्र आनाय्य सर्वाः प्रजाः सन्तोषयतु भवान्'' इति ।

एतत् सर्वं श्रुत्वा धृतराष्ट्रः क्षणं विचिन्त्य विदुरम् उक्तवान् - ''भीष्मद्रोणयोः भवतः च कथनं युक्तम् एव । विदुर ! पाण्डवाः मम पुत्रसमानाः एव । भवान् इदानीम् एव काम्पिल्यनगरं गत्वा पाण्डवान्, कुन्तीं, द्रौपदीं च अत्र आनयतु । ते लाक्षागृहे न दग्धाः इति तु अस्माकं सौभाग्यम् । द्रुपदस्य पुत्री द्रौपदी पाण्डवानां पत्नी जाता इति यत् तत् सुखाय एव जातम् । तस्मात् मम चिन्ता परिहृता'' इति ।

अनेकानि रत्नाभरणानि, कौशेयवस्त्राणि, अन्यानि कानिचन उपायनानि च स्वीकृत्य विदुरः काम्पिल्यनगरं गतवान् । तत्र द्रुपदं, धृष्टद्युम्नम्, अन्यान् कांश्चन प्रमुखान्, पाण्डवान्, कृष्णं च दृष्ट्वा कुशलादिकं पृष्ट्वा सर्वेभ्यः उपायनानि दत्तवान् । एतस्मात् सर्वे अतीव सन्तुष्टाः ।

अनन्तरं विदुरः सभायां द्रुपदम् उक्तवान् - ''महाराज ! भवतः बान्धव्यं सम्पादितवन्तौ धृतराष्ट्रः भीष्मः च अतीव सन्तुष्टौ स्तः । तौ 'भवतां कुशलवार्तां ज्ञात्वा आगच्छतु' इति उक्त्वा प्रेषितवन्तौ माम् । अपि च भवतः पुत्री पाण्डवानां पत्नी जाता इति यत्, तत् महतः

सन्तोषस्य विषयः । हस्तिनापुरात् अत्र आगताः पाण्डवाः, सुदीर्घः कालः अतीतः चेदपि न प्रत्यागताः । कौरवाः सर्वे पाण्डवानां दर्शनोत्सुकाः सन्ति । द्रौपदीं द्रष्टुकामाः अन्तःपुरस्य स्त्रियः ताम् एव प्रतीक्षमाणाः सन्ति । भवतः अनुमतिं स्वीकृत्य पाण्डवाः हस्तिनापुरं प्रति आनेतव्याः इति धृतराष्ट्रः मां सूचितवान् अस्ति । अतः पाण्डवानां नयनार्थं कृपया अनुमतिं ददातु भवान्'' इति ।

एतत् श्रुत्वा द्रुपदः उक्तवान् - ''कौरवैः सह बान्धव्यसम्पादनेन अहम् अपि सन्तुष्टः अस्मि । धृतराष्ट्रस्य आह्वानं, भवतः अत्र आगमनं च महान्तं सन्तोषं जनयति मम । एवं सति पाण्डवानां प्रेषणं न शक्यम् इति कथं वदेयम् अहम्? किन्तु एतद्विषये बलराम-कृष्णयोः अनुमतिः अपि प्रष्टव्या । यतः तौ पाण्डवानां हितचिन्तकौ । पाण्डवाः अपि धर्मपराः, शक्तिमन्तः, विवेकिनः च । तेषाम् अभिप्रायः अपि मुख्यः एव'' इति ।

तदा युधिष्ठिरः द्रुपदम् उक्तवान् - ''महाराज ! वयं भवदधीने स्मः । अतः अस्माभिः किं करणीयम् इति भवान् एव निर्णयं करोतु'' इति ।

तदा कृष्णः उक्तवान् - ''अहं चिन्तयामि यत् विदुरस्य अपेक्षानुसारं तेन सह पाण्डवानां हस्तिनापुरं प्रति प्रेषणम् एव वरम् इति । किन्तु सर्वदृष्ट्या अपि पाण्डवानां हितचिन्तकस्य द्रुपदस्य



अभिप्रायः एव प्रमुखः'' इति ।

कृष्णस्य वचनं श्रुत्वा द्रुपदः उक्तवान् - ''इदानीं पाण्डवाः मम समीपबान्धवाः जाताः सन्ति । किन्तु कृष्णस्य तु ते बाल्यात् अपि आत्मीयाः । दूरे तिष्ठन् अपि कृष्णः सदा पाण्डवानां हितम् एव चिन्तयति । अतः कृष्णः यत् वदति, तदेव ममापि अनुमतम्'' इति ।

हस्तिनापुरं प्रति पाण्डवानां गमनार्थं द्रुपदः अनुमतिं दत्तवान् । द्रौपदी, कुन्ती, पाण्डवाः च विदुरेण सह हस्तिनापुरं प्रति प्रस्थिताः । कृष्ण-बलरामौ अपि तान् अनुसृतवन्तौ । विदुरेण प्रेषितः दूतः पूर्वम् एव हस्तिनापुरं गत्वा पाण्डवानाम् आगमनं धृतराष्ट्रं निवेदितवान् ।

एतां वार्तां श्रुत्वा सन्तुष्टः धृतराष्ट्रः पाण्डवानां स्वागतार्थं विकर्णं, चित्रसेनं, द्रोणं, कृपाचार्यं च प्रेषितवान् ।

पाण्डवानां हस्तिनापुरस्य प्रवेशात् पूर्वं नगरं तोरणादिभिः सुन्दरम् अलङ्कृतम् अभवत् । पाण्डवानाम् आगमनेन प्रजाः नितरां सन्तुष्टाः । राजभवनम् आगताः पाण्डवाः भीष्मम्, इतरान् ज्येष्ठान् च नमस्कृतवन्तः ।

कानिचन दिनानि अतीतानि । धृतराष्ट्रः पाण्डवान् कृष्णं च आहूय उक्तवान् - "भाविनि काले भवतां दुर्योधनादीनां च मध्ये द्वेषः उत्पन्नः भवेत् । अतः राज्यस्य अर्धभागं भवद्भ्यः इदानीम् एव दास्यामि अहम् । अद्य आरभ्य भवन्तः खाण्डवप्रस्थे वासं कुर्वन्तः स्वस्य राज्यं पालयन्तः सुखेन जीवन्तु" इति ।

युधिष्ठिरः धृतराष्ट्रस्य वचनम् अङ्गीकृतवान् । अनन्तरं सः ज्येष्ठान् सर्वान् नमस्कृत्य अनुजैः, द्रौपद्या, कृष्णबलरामाभ्यां च सह खाण्डवप्रस्थं प्रति प्रस्थितः ।

खाण्डवप्रस्थं नाम भयङ्करम् अरण्यम् । एतत् ज्ञात्वा कृष्णः इन्द्रं स्मृतवान् । कृष्णस्य उद्देशं ज्ञात्वा इन्द्रः विश्वकर्माणं खाण्डव-प्रस्थं प्रति प्रेषितवान् ।

विश्वकर्मा खाण्डवप्रस्थे सुन्दरं नगरमेकं निर्मितवान् । नगरं परितः उन्नताः भित्तयः, भित्तीः परितः गभीराणि खातानि च निर्मितानि । नगरस्य मुख्यद्वारं, विशालाः मार्गाः, राजास्थानं, देवालयाः, सुन्दराणि उद्यानानि च निर्मितानि अभवन् । तत् नगरम् 'इन्द्रप्रस्थम्' इति नाम्ना प्रख्यातम् अभवत् ।

नगरस्य मध्यभागे पाण्डवानां वासार्थं भवनानि आसन् । चतुर्वर्णीयाः जनाः, शिल्पकलानिपुणाः च इन्द्रप्रस्थम् आगत्य वासं कृतवन्तः ।

युधिष्ठिरः पत्न्या सह, अनुजैः सह च सुखेन जीवन् राज्यपालनं कृतवान् । कानिचन दिनानि अतीतानि । कृष्णः पाण्डवानाम् अनुमतिं प्राप्य ततः द्वारकां प्रति प्रस्थितः ।



# शुकः भाषते

अमृतपुरस्य राजवीथ्यां कश्चित् वृद्धः पञ्जरस्थान् शुकान् जनेभ्यः दर्शयन् वदति स्म - ''पश्यन्तु । एते शुकाः भाषन्ते । यत् शृण्वन्ति तत् पुनः उच्चारयन्ति एते । एकस्य पञ्च रूप्यकाणि । सकृत् विक्रीतः शुकः पुनः न प्रतिस्वीक्रियते मया । एषः अस्माकं वंशस्य सम्प्रदायः । भवतां भाग्यं यदि अस्ति, तर्हि शुभं भविष्यति'' इति ।

केचन शुकान् क्रीतवन्तः । एतत् दृष्ट्वा वीरेशनामकः कश्चित् एकं शुकं क्रीत्वा गृहं नीतवान् । शुकस्य मुखात् वाचयितुं प्रयत्नं कृतवान् च । किन्तु शुकः किमपि न भाषितवान् एव । नूतनप्रदेशः इत्यतः शुकः भयात् मौनम् आश्रितवान् स्यात् इति विचिन्त्य वीरेशः दिनद्वयं यावत् अधिकानि फलानि धान्यानि च शुकाय खादितुं दत्तवान् । तथापि किमपि प्रयोजनं न जातम् ।

एतस्मात् खिन्नः वीरेशः तं शुकं स्वीकृत्य वृद्धस्य समीपं गत्वा कोपेन उक्तवान् - ''रे वृद्ध ! भवता वञ्चना कृता । इतरान् वञ्चयन् एव भवान् जीवति किम्? शुकः यत् शृणोति, तत् प्रत्युच्चारयति इति भवता उक्तम् आसीत् खलु ! किन्तु एषः शुकः किमपि न वदति'' इति ।

वृद्धः तं शुकं हस्तेन गृहीत्वा परीक्ष्य किमपि उक्तवान् । तत् वचनं शुकः न प्रत्यवदत् । तदा वृद्धः उक्तवान् - ''स्वामिन् ! पूर्वम् एव मया उक्तम् आसीत् खलु - 'शुकः सकृत् विक्रीतः चेत् न प्रतिस्वीक्रियते' इति । एषः शुकः बधिरताकारणतः कष्टम् अनुभवन् अस्ति इति यत् तत् भवतः दौर्भाग्यम् । उत्तमस्य वैद्यस्य समीपं नीत्वा एतस्य चिकित्सां कारयतु'' इति ।



# सप्तपर्णवृक्षः

केभ्यश्चित् वर्षेभ्यः पूर्वं पाठशालार्थम् उपयुज्यमानानां कृष्णवर्णीयानाम् आसन्दानां निर्माणार्थं सप्तपर्णवृक्षाः उपयुज्यन्ते स्म । वृक्षशास्त्रे एषः वृक्षः आल्स्टोनिया स्कोलारिस् इति उच्यते । आङ्ग्लभाषया एषः 'डेविल् ट्री' तन्नाम पिशाचवृक्षः इति उच्यते । एषः हिन्दीभाषया 'चाटिन्' इति, आस्सामिभाषया 'चैटेन्' इति, मराठीभाषया 'चैतान्' इति, ओरियाभाषया 'चाटिनन्' इति, वङ्गालीभाषया 'छाटिम्' इति च उच्यते । मलयाळभाषया 'पाला' इति, तमिळुभाषया 'पाला' इति, तेलुगुभाषया 'पलाशी' इति च उच्यते एषः वृक्षः । ५-६ से.मी. दैर्घ्ययुतानि एतस्य पर्णानि मृदूनि भवन्ति ।

सदा हरितायमानः एषः वृक्षः २५मी. उन्नतं वर्धते, एतस्य त्वक् धूम्रवर्णयुता किञ्चिदिव रूक्षा च भवति । शाखाः प्रसृताः भवन्ति । हरितवर्णीयानि एतस्य पुष्पाणि गुच्छाकारकाणि । एतस्य पुष्पाणि सुगन्धयुतानि भवन्ति । गुच्छाकारकाणि एतस्य फलानि ३०-६० से.मी. दैर्घ्ययुतानि भवन्ति ।



येषु प्रदेशेषु आवर्षं वृष्टिः पतति तत्र तन्नाम पश्चिमदिशायाः विन्ध्यखातासु, वृक्षाः बाहुल्येन वर्धन्ते । एतस्य त्वक् औषधगुणयुक्ता अस्ति । एतस्य काष्ठं किञ्चिदिव मृदु भवति इति कारणतः अङ्कनीनिर्माणार्थम् अग्निशलाकानिर्माणार्थं च एतस्य उपयोगः क्रियते ।

एषः वृक्षः पिशाचानां निवासस्थानम् इति केषाञ्चित् अभिप्रायः । उत्तरदिशि स्थितानां खातानां समीपे निवसन्तः आदिजनाः एतस्य वृक्षस्य अधः उपवेशनार्थं चलनार्थं च अपि भीतिम् अनुभवन्ति ।

## अस्माकं देशस्य ऋषयः -७

# दधीचिः

वेदेषु चतुर्थस्य अथर्ववेदस्य मूलपुरुषः महामुनिः अथर्वा । तस्य पुत्रः महर्षिः दधीचिः । बाल्यात् एव दधीचिः कठिनान् नियमान् पालयति स्म । सः एकाग्रचित्तः सन् ध्यानं करोति स्म । तस्य कठोरतपसा तदीयानि अस्थीनि अपि पवित्राणि जातानि ।

देवतानाम् अधिपतिः इन्द्रः दधीचिं कानिचन प्रकृतिरहस्यानि बोधितवान् । इन्द्रः दधीचिं सूचितवान् आसीत् यत् - तानि रहस्यानि कस्यापि समीपे न वक्तव्यानि इति । दधीचिः अपि एतत् अङ्गीकृतवान् आसीत् । किन्तु कालान्तरे वैद्यज्ञानिन्यः देवताः दधीचिं प्रार्थितवत्यः - 'इन्द्रतः ज्ञातानि रहस्यानि वदतु' इति । देवतानां प्रार्थनां तिरस्कर्तुम् अनिच्छन् दधीचिः अनिर्वचनीयानि अपि रहस्यानि उक्तवान् ।

एतत् वचनं ज्ञात्वा 'दधीचिः वचनभ्रष्टः जातः' इति विचिन्त्य इन्द्रः कुपितः । कोपावेशेन सः चिन्तितवान् - दधीचिमुनेः शिरच्छेदः करणीयः इति । एषः विषयः अश्विनीदेवताभ्यां ज्ञातः । दधीचिं रक्षितुम् इच्छन्त्यौ ते दधीचेः शिरः कर्तयित्वा तस्मिन् स्थाने अश्वस्य शिरः स्थापितवत्यौ । अश्वस्य शिरः एव दधीचेः शिरः मत्वा इन्द्रः तत् शिरः छिन्नवान् । अनन्तरं अश्विनीदेवते दधीचेः शिरः आनीय मुण्डभागे योजितवत्यौ । एवं दधिचिः विपत्तितः मुक्तः जातः ।

देवासुराणां युद्धं सुदीर्घकालं यावत् प्राचलत् । 'तपसा पूतस्य दधीचेः अस्थ्नाम् उपयोगः आयुधत्वेन यदि क्रियते, तर्हि अस्माकं जयः भवति' इति देवताः चिन्तितवत्यः । दधीचिः एतत् ज्ञातवान् । दयालुः सः अनुक्षणं नदीतीरे ध्यानार्थम् उपविष्टवान्, योगशक्त्या स्वशरीरं दग्ध्वा देवतानां साहाय्यार्थम् अस्थीनि अवशेषितवान् च । एवं दधीचेः त्यागगुणः महान् आसीत् । सः त्यागिषु 'ध्रुवतारा'रूपेण स्थितः ।



# भवन्तः जानन्ति वा?

१. तस्य नाम किम् , यश्च गुरुनानकस्य गानसमये 'रबाब्' वादयति स्म ?
२. अस्माकं देशस्य कस्यचित् नदस्य चत्वारि नामानि सन्ति । सः नदः कः ? तानि नामानि च कानि ?
३. सा क्रीडा का, यस्यां च क्रीडायां विजयिनः पृष्ठतः धावन्ति, पराजिताः पुरतः धावन्ति ?
४. सामान्यतः श्वासक्रियायाः वेगः कियान् ?
५. दक्षिणभारते स्थितः अद्वितीयः जैनदेवालयः कुत्र अस्ति ?
६. पर्षियासाम्राज्यस्य स्थापकः कः ?
७. पुराणेषु श्रूयमाणः कः पादे बाणस्पर्शेन मृतः ?
८. अमेरिकादेशस्य राष्ट्रपक्षी कः ?
९. ग्रन्थालयस्य संशोधकः प्रथमः ग्रीक्पण्डितः कः ?
१०. विन्ध्यपर्वतस्य दक्षिणदिशि स्थितम् उन्नततमं पर्वतशिखरं किम् ?
११. 'डयमानः सर्पः' इति नाम किमर्थम् आगतम् ?
१२. प्रपञ्चस्य दीर्घतमः धूमशकटमार्गः कः ?
१३. ते चत्वारः समुद्राः के, ये च स्ववर्णनाम्ना एव प्रसिद्धाः ?

## उत्तराणि

१. मर्धनाचर्यः ।
२. ब्रह्मपुत्रः । टिबेट्मध्ये साङ्पो इति, अरुणाचलप्रदेशे दिबङ्ग् सियाङ्ग् इति, बंग्लादेशे मेघना इति च।
३. जूडो ।
४. प्रतिनिमेषं १५-१८ वारम् ।
५. तमिळुनाडुराज्यस्य पुदुक्कोटेसमीपस्थे सित्तनवासल्मध्ये ।
६. सैरस्चक्रवर्ती ।
७. श्रीकृष्णः ।
८. केशरहितः गरुडपक्षी ।
९. केरलराज्यस्य पश्चिमखातस्थम् आनैमुडि । (२,७०० मी. उन्नतम् )
१०. यूरिपिडेस्वर्यः। (क्रि. पू. ४८०-४०६)
११. वृक्षात् वृक्षं प्रति डयते इति कारणतः ।
१२. मास्कोतः व्याडिवास्टूपर्यन्तं स्थितः ट्रान्स् सैबीरियन् मार्गः ।
१३. श्वेतसमुद्रः, कृष्णसमुद्रः, रक्तसमुद्रः, हरितसमुद्रः च ।



# विश्वासः

वीरेशः प्रख्यातः वैद्यः । तस्य हस्तगुणः उत्तमः अस्ति इति बहूनां विश्वासः । एवं सति कदाचित् श्रीनाथ-नामकः वैद्यकीयं ज्ञातुम् इच्छन् वीरेशस्य समीपं गतवान् । तस्य शिष्यत्वेन तत्रैव स्थितवान् च ।

तस्मिन् ग्रामे, परितः स्थितेषु ग्रामेषु च कदाचित् विचित्रः कश्चन महारोगः आरब्धः । तेन रोगेण पीडिताः जनाः शक्तिहीनाः सन्तः दिने दिने शरीरे कृशताम् अनुभवन्ति स्म । अतः सः रोगः 'क्षीणरोगः' इति नाम प्राप्नोत् ।

एतस्य रोगस्य निवारणार्थं वीरेशस्य समीपे औषधं न आसीत् । सः त्रिचतुराणि दिनानि यावत् निरन्तरं परिश्रमं कृत्वा वैद्यकीयग्रन्थान् सुसूक्ष्मं परिशील्य क्षीणरोगस्य निवारणोपायम् अन्विष्टवान् ।

ततः वीरेशः श्रीनाथम् उक्तवान् - ''क्षीणरोगस्य निवारणार्थम् आवश्यिकाः मूलिकाः सङ्गृह्णातु'' इति ।

श्रीनाथः मूलिकाः सङ्गृहीतवान् । सङ्ग्रहणसमये तादृश्यः एव अन्याः अपि काश्चन मूलिकाः सङ्गृह्य पृथक् स्थापितवान् । सः गुरोः मार्गदर्शने औषध-गुलिकाः निर्माय ताः गुलिकाः करण्डके स्थापितवान् । अनन्तरं सः वीरेशम् अनुक्त्वा आत्मना आनीताः इतराः मूलिकाः उपयुज्य अपि काश्चन गुलिकाः निर्मितवान् ।

अनन्तरदिने श्रीनाथः गुरुं वीरेशम् उक्तवान् - ''गुरुवर्य ! क्षीणरोगः बहुषु ग्रामेषु प्रसृतः अस्ति । एतस्य निवारणार्थं भवतः मार्गदर्शने मया गुलिकाः निर्मिताः । क्षीणरोगस्य औषधनिर्माणं मया अपि ज्ञातम् इदानीम् इत्यतः अहम् अपि रोगिणां चिकित्सां कर्तुं शक्नोमि । अस्यां परि-

स्थितौ अहं चिकित्सायाः आरम्भं करोमि चेत् रोगिणः अधिकसंख्यया मत्समीपे आगमिष्यन्ति । तस्मात् अहम् 'उत्तमवैद्यः' इति प्रसिद्धिं प्राप्तुं शक्नोमि । कृपया माम् आशिषा अनुगृह्णातु भवान्'' इति ।

तदा वीरेशः अनङ्गीकारपूर्वकं शिरः चालयन् उक्तवान् - ''वैद्यकीयज्ञानम् अन्यत्, चिकित्साकरणम् अन्यत् । भवान् एकं वर्षं यावत् मया सह स्थास्यति चेत् अनन्तरं भवान् स्वतन्त्रतया वैद्यवृत्तिं कर्तुं शक्ष्यति । वैद्यवृत्तिः न तावती सुलभा । तत्रापि क्षीणरोगः अत्यन्तम् अपायकरः । औषधं भवान् जानाति चेत् अपि चिकित्सां कुर्वन् वैद्यकीयक्षेत्रे प्रसिद्धिं प्राप्तुं न शक्नोति'' इति ।



श्रीनाथः गुरोः वचनं न तिरस्कृतवान् । किन्तु 'एतस्मिन् समये क्षीणरोगः प्रबलः अस्ति इत्यतः वैद्यवृत्तेः आरम्भार्थम् एषः अपूर्वः अवकाशः । अतः कृपया अनुमतिं ददातु भवान्' इति गुरुं प्रार्थितवान् श्रीनाथः ।

श्रीनाथस्य दीनवचनं श्रुतवति वीरेशे करुणा उत्पन्ना । सः शिष्यं श्रीनाथम् उद्दिश्य - ''एवं तर्हि भवान् पार्श्वग्रामे वैद्यवृत्तेः आरम्भं करोतु । क्षीणरोगस्य निवारणार्थम् आवाभ्यां निर्मितानां गुलिकानां दानेन रोगी प्रथमदिने महतीं वेदनाम् अनुभवति । एषः विषयः पूर्वम् एव उक्तः चेत् रोगी भीतः भवति । अतः न वक्तव्यम् । रोगी यदा वेदनां सोढुं न शक्नोति, तदा 'औषधपरिवर्तनं करोमि' इति रोगिणम् उक्त्वा पूर्वं दत्तम् एव औषधं दातव्यम् । दश दिनानि यावत् रोगी भिन्नभिन्नरोगेण पीडितः भवेत्। सप्ताहद्वयाभ्यन्तरे रोगी रोगात् मुक्तः भविष्यति । किन्तु सप्ताहद्वयं यावत् प्रीत्या सहनया च रोगिणः चिकित्सा करणीया'' इति बोधितवान् ।

'औषधदानापेक्षया प्रसिद्धिप्राप्तिः एव कष्टकरी' इति विचिन्त्य श्रीनाथः कञ्चित् उपायं चिन्तितवान् । सः गुरोः गृहात् प्रस्थानसमये आत्मना पूर्वं रहस्येन निर्मिताः गुलिकाः गुरोः सकाशे संस्थाप्य गुरोः मार्गदर्शने निर्मिताः गुलिकाः स्वीकृतवान् ।



'मया निर्मितानां गुलिकानां उपयोगेन रोगः शान्तः न भविष्यति । तस्मात् वीरेशस्य विषये जनानां दुरभिप्रायः उत्पन्नः भविष्यति । मया तु प्रसिद्धिः प्राप्ता भविष्यति' इति चिन्तनं श्रीनाथस्य ।

एवं विचिन्त्य श्रीनाथः पार्श्वस्थं ग्रामं गत्वा 'निपुणवैद्यः' इति आत्मानं परिचाय्य तत्र वैद्यवृत्तिम् आरब्धवान् । तस्मिन् ग्रामे क्षीणरोगेण पीडिताः जनाः शताधिकाः आसन् । किन्तु तेषु केवलौ द्वौ रोगिणौ चिकित्सार्थं श्रीनाथम् आश्रितवन्तौ । श्रीनाथेन दत्तां गुलिकां खादित्वा तौ महतीम् उदरवेदनाम् अनुभूतवन्तौ ।

श्रीनाथः रोगिणोः गृहं गत्वा तौ उक्तवान् - ''भीतिः मास्तु । अन्यत् औषधं दास्यामि अहम् । सप्ताहद्वयं यावत् मया दीयमानम् औषधं स्वीक्रियते चेत् रोगः शान्तः भविष्यति इति ।

रोगिणौ श्रीनाथस्य वचनम् अङ्गीकृतवन्तौ । किन्तु तौ प्रतिदिनं विभिन्नवेदनया महत् कष्टम् अनुभवतः स्म ।

एतावता पार्श्वग्रामे वीरेशः क्षीणरोगिणां चिकित्साम् आरब्धवान् अस्ति इति विषयः सर्वैः ज्ञातः । अनुक्षणं केचन रोगिणः वीरेशस्य ग्रामं गन्तुम् उद्युक्ताः । तदा श्रीनाथः तान् निवारयन् उक्तवान् - ''क्षीणरोगविषये मदपेक्षया अधिकं न जानाति वीरेशः । अतः भवतां तत्र गमनेन अपि किमपि प्रयोजनं न भवति'' इति ।

किन्तु श्रीनाथस्य एतत् वचनं रोगिणः न लक्षितवन्तः एव । ते ततः वीरेशस्य ग्रामं गतवन्तः ।

''यदि रोगः शान्तः न भविष्यति, तर्हि ते स्वयं ज्ञास्यन्ति मम सामर्थ्यम्'' इति मनसः समाधानं प्राप्तवान् श्रीनाथः ।

किन्तु श्रीनाथः यथा चिन्तितवान् तथा न प्रवृत्तम् एव । वीरेशसमीपे चिकित्सार्थं गताः रोगिणः चतुर्णां दिनानाम् अनन्तरं स्वस्थाः सन्तः प्रत्यागताः । ते शरीरवेदनां किञ्चिदपि न अनुभूतवन्तः आसन् । एतत् दृष्ट्वा श्रीनाथस्य रोगिणौ अपि वीरेशसमीपम् एव गतवन्तौ ।

परिस्थितिः एवं भवेत् इति श्रीनाथस्य कल्पना अपि न आसीत् । एतस्याः

घटनातः कुपितः सः ततः वीरेशस्य गृहं गत्वा उक्तवान् - "मद्विषये भवान् अन्याय्यम् आचरितवान्" इति ।

एतत् श्रुत्वा आश्चर्यचकितः वीरेशः - "भवद्विषये मया कीदृशम् अन्याय्यम् आचरितम्?" इति पृष्टवान् ।

"क्षीणरोगस्य निवारणार्थं सप्ताहद्वयं यावत् औषधं दातव्यम् इति भवान् माम् उक्तवान् आसीत् । तदपि रोगिणां वेदनाजनकम् औषधं मां सूचितवान् भवान् । किन्तु त्रिषु दिनेषु एव यथा रोगः शान्तः भवेत्, तादृशम् औषधम् उपयुक्तम् । तदपि वेदनारहितम् औषधम् ! अतः कोऽपि क्षीणरोगी मत्सकाशं चिकित्सार्थं न आगच्छति" इति उक्तवान् श्रीनाथः ।

एतत् श्रुत्वा आश्चर्यचकितः वीरेशः उक्तवान् - "भवता सज्जीकृत्य अत्र स्थापितस्य औषधस्य एव उपयोगं कृतवान् अहम् । वैद्यकीयविषये मया किमपि न गोपितम् । सर्वं बोधितवान् अस्मि भवन्तम् । कस्य रोगस्य निवारणार्थं कीदृश्यः मूलिकाः उपयोक्तव्याः, कियता प्रमाणेन मिश्रीकरणीयाः इत्यादिविषयाः मया विस्तरेण विवृताः आसन् खलु ! तदपि भवतः हस्तात् एव औषधं सज्जीकारितम् आसीत् मया" इति ।

तदा श्रीनाथः चिन्तितवान् - 'एवं तर्हि पूर्वं वीरेशस्य गृहे आत्मना रहस्यरूपेण सज्जीकृतम् औषधं, वीरेशेन



ग्रन्थावलोकनपूर्वकं सज्जीकृतस्य औषधस्य अपेक्षया अपि उत्तमम् अस्ति' इति ।

एवं चिन्तयित्वा श्रीनाथः वीरेशम् उक्तवान् - "गुरुवर्य ! भवतः शास्त्रग्रन्थेषु सूचितस्य औषधस्य अपेक्षया मया सज्जीकृतम् औषधम् उत्तमम् इति निर्णीतम् अभवत् । अद्य आरभ्य मम ज्ञानानुसारम् अहम् औषधनिर्माणं करिष्यामि । भवान् रोगिणां चिकित्सार्थं मया सज्जीकृतानाम् औषधानाम् उपयोगं करोतु । भवता सम्पादिते अर्धभागं मह्यं ददातु भवान्" इति ।

एतत् श्रुत्वा कुपितः वीरेशः उच्चस्वरेण उक्तवान् - "रे मूर्ख ! क्षीणरोगस्य निवारणार्थं मया सूचितम् औषधं परित्यज्य

अन्यत् औषधं सज्जीकृतवान् भवान् । एषः अक्षम्यः अपराधः । अतः वस्तुतः भवान् न्यायालयं प्रति नेतव्यः'' इति ।

श्रीनाथः वीरेशं कदापि तादृशकोपावस्थायां न दृष्टवान् आसीत् । सः भीतिम् अनुभवन् एव उक्तवान् - ''मया सज्जीकृतेन औषधेन हितम् एव जातं खलु !'' इति ।

तदा वीरेशः समाधानचित्तः सन् श्रीनाथं पृष्टवान् - ''एतस्य औषधस्य निर्माणार्थं भवता कीदृश्यः मूलिकाः उपयुक्ताः ?'' इति ।

तदा श्रीनाथः आत्मना कथम् औषधं सज्जीकृतम् इति वीरेशम् उक्तवान् ।

एतत् श्रुत्वा वीरेशः उक्तवान् - ''भवता सज्जीकृते औषधे क्षीणरोगस्य निवारणचिह्नम् एव नास्ति । यदि भवता एतत् औषधं रोगिभ्यः दत्तं स्यात्, तर्हि रोगिणः मृताः अभविष्यन् । अद्य एव अहम् एतस्य औषधस्य दानं परित्यजामि'' इति ।

अनन्तरं वीरेशः क्षीणरोगनिवारिकाः मूलिकाः सङ्गृह्य तस्यां रात्रौ एव गुलिकाः सज्जीकृतवान् । क्षीणरोगिणः ताः गुलिकाः खादित्वा दिनत्रयाभ्यन्तरे एव स्वस्थाः अभवन् । एतत् सर्वम् अवलोकितवतः श्रीनाथस्य महत् आश्चर्यम् ।

तदा वीरेशः श्रीनाथस्य भावम् अवगत्य उक्तवान् - ''चिकित्सायां वैद्यविषयकः विश्वासः एव प्रधान्यम् आवहति, न तु केवलम् औषधम् । मद्विषयकेण विश्वासेन रोगिणः मम समीपम् आगतवन्तः । तेषां रोगः शान्तः अभवत् । किन्तु सर्वदा तथैव भवति इति वक्तुं न शक्यते । अतः भवता महान् अपराधः कृतः । रोगिणां विषये यः प्रयोगं करोति, तस्य वैद्यवृत्तिः न युज्यते । अतः भवान् अन्यत् किमपि कार्यं कुर्वन् जीवनं यापयतु । गच्छतु इतः'' इति ।

गुरोः वचनं श्रुत्वा स्वदोषं ज्ञातवान् श्रीनाथः । सः मौनं ततः निर्गतवान् ।





# मायाद्वीपः

पूर्वं कस्मिंश्चित् ग्रामे केशवनामकः कश्चित् युवकः आसीत् । द्वीपान्तरं गत्वा धनं सम्पादयितुम् इच्छन् सः कदाचित् कस्यचित् वणिजः नौकया प्रस्थितः ।

कानिचन दिनानि यावत् समुद्रप्रयाणं विना विघ्नं सम्पन्नम् । किन्तु अनन्तरं कदाचित् समुद्रे उत्पन्नात् भीकरतरङ्गात् तदीया नौका जले निमग्ना जाता । इतरे प्रयाणिकाः कुत्र गताः इत्येव न ज्ञातम् तेन । किन्तु केशवः समुद्रतरङ्गैः कञ्चित् द्वीपं प्रति नीतः ।

तस्मिन् द्वीपे मानवाः पक्षिणः प्राणिनः वा न आसन् । सर्वत्र नारिकेलवृक्षाः दृश्यन्ते स्म । नरिकेलफलानां खादनेन एव बुभुक्षानिवारणं विना अन्यः उपायः न आसीत् । अतः केशवः नारिकेलफलानाम् उत्पाटनार्थम् वृक्षम् आरूढवान् ।

वृक्षम् आरूढवता केशवेन किञ्चन अपूर्वं दृश्यं दृष्टम् । कश्चित् स्थूलाकारकः वन्यसूकरः वायौ डयमानः तस्य द्वीपस्य दिशि आगच्छन् आसीत् । एतत् दृष्ट्वा केशवः अतीव आश्चर्यचकितः । सः सूकरः तं द्वीपम् आगत्य अवतीर्णः । सः आतपे शयनं कृत्वा गाढनिद्रायां निलीनः जातः।

केशवः वृक्षात् अवतीर्य अधः आगत्य समीपतः सूकरम् अवलोकितवान् । दर्शनेन सः सामान्यसूकरः इव आसीत् । तस्य पार्श्वे बृहदाकारकं वज्रमेकम् आसीत् । सूकरेण एव तत् वज्रम् आनीतं स्यात् इति चिन्तयन् केशवः तत् वज्रं गृहीत्वा सूक्ष्मदृष्ट्या परिशीलितवान् । तादृशं बृहदाकारकं वज्रम् इतःपूर्वं न दृष्टम् आसीत् केशवेन । एतत् वज्रं स्वीकृत्य एतस्मात् द्वीपात् निर्गमिष्यामि चेत्

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



दारिद्र्यात् मुक्तिं प्राप्य सुखेन जीविष्यामि इति चिन्तितवान् केशवः ।

तावता सूकरस्य निद्रा स्थगिता । तस्य उत्थानलक्षणं दृष्टम् । एतत् दृष्ट्वा भीतः केशवः - ''हा हन्त! एषः सूकरः मां यदि मारयिष्यति तर्हि का गतिः मम । वृक्षस्य उपरि एव मया स्थातव्यम् आसीत्'' इति यावत् मनसि चिन्तितवान्, तावता केशवः वायौ प्लवमानः गत्वा नारिकेलवृक्षे उपविष्टवान् ।

'एतत् वज्रम् अपूर्वशक्तिमत् अस्ति । एतत् गृहीत्वा यत्किमपि प्रार्थ्यते चेत् अपि तत् सिध्यति । एतस्य कारणतः एव सूकरः वायौ डयमानः आगतवान्' इति तर्कितवान् केशवः । अत्रान्तरे सूकरः निद्रातः जागरितः । सः केशवेन यस्मिन् वृक्षे उपविष्टम् आसीत् तस्य वृक्षस्य समीपम् आगत्य उपरि दृष्टवान् । केशवस्य हस्ते स्थितं वज्रं दृष्ट्वा सः सूकरः उच्चैः गर्जनं कृतवान् ।

तदा केशवः भारयुतं किञ्चन नारिकेलफलं उत्पाट्य तेन बलात् सूकरस्य शिरसि ताडितवान् । ताडनेन सूकरः मूर्च्छां गतः । एषः एव योग्यः समयः सूकरस्य मारणार्थम् इति विचिन्त्य केशवः वज्रसाहाय्येन वृक्षात् अधः आगत्य महाशिलाखण्डेन सूकरं मारितवान् ।

सः सूकरः कश्चित् मन्त्रवादी आसीत् । सूकरवेषेण वायौ अटने तस्य महती प्रीतिः आसीत् । केशवः आत्मना मार्यमाणः मन्त्रवादी इति ज्ञानं विना एव तं मारयित्वा शक्तियुतं वज्रं सम्पादितवान् । तस्मिन् द्वीपे अन्ये अपि केचन मन्त्रवादिनः आसन् । एतम् अपि विषयं केशवः न जानाति स्म ।

केशवस्य समीपे विद्यमानं वज्रं तदीयाः अपेक्षाः पूरयति स्म इत्यतः तस्य भयम् अपगतम् । तं द्वीपं द्रष्टुम् इष्टवान् सः । अपरक्षणे एव सः वायौ प्लवमानः द्वीपस्य अन्तः गतवान् ।

सुदूरात् तेन धूमः दृष्टः । प्रायशः तत्र जनाः निवसन्ति । ते जनाः द्रष्टव्याः इति उद्देशेन केशवः तस्यां दिशि गतवान् । तत्र किञ्चन कुटीरम् आसीत् । पङ्गुः कश्चित् तत्र उपविश्य अग्नौ अजशावकं पचन्

आसीत् ।

केशवः तस्य समीपं गत्वा पृष्टवान् - "स्वामिन् ! मह्यं किञ्चित् आहारं, शयनार्थं स्थलं च ददाति वा? " इति ।

"आगच्छतु, मम समीपे स्थितम् आहारम् एव विभज्य खादाव" इति वदन् पङ्गुः पक्वस्य अजशावकस्य अर्धभागं केशवाय दत्तवान् । किन्तु सः पङ्गुः तीक्ष्णदृष्ट्या केशवम् एव पश्यन् आसीत् । दर्शनेन सः केशवम् अपि पक्त्वा खादेत् वा इति भासते स्म । आहारस्य खादनानन्तरं सः पङ्गुः केशवं पृष्टवान् - "भवान् अत्र कथम् आगतवान्?" इति ।

तदा केशवः प्रवृत्तं सर्वं तं पङ्गुं निवेद्य तस्मै वज्रं दर्शितवान् ।



वस्तुतः सः पङ्गुः मन्त्रवादी आसीत् । सः केशवस्य कथनं श्रुत्वा - "पादहीनः अहं चलितुम् असमर्थः अस्मि । यदि भवान् तत् वज्रं मह्यं ददाति, तर्हि अहं भवते अपूर्वशक्तियुतं परशुं ददामि । परशोः त्सरुं ताडयित्वा 'अग्निम् उत्पादयतु' इति वदति चेत् परशुः काष्ठम् आनीय अग्निम् उत्पादयति । त्सरोः ताडनपूर्वकं 'शिरश्छेदनं करोतु' इति उक्तं चेत् पुरतः स्थितस्य प्राणिनः शिरश्छेदनं करोति" इति उक्तवान् ।

"भवतु" इति वदन् केशवः स्वकीयं वज्रम् एकस्मिन् हस्ते संस्थाप्य द्वितीयेन हस्तेन परशुं गृहीतवान् । तत्क्षणम् एव सः त्सरुं ताडयित्वा 'शिरश्छेदनं करोतु' इति उक्तवान् । परशुः पङ्गोः शिरश्छेदनं कृतवान् ।

परशुं वज्रं च स्वीकृत्य केशवः सूर्यास्तात् पूर्वम् एव अन्यत् किञ्चन कुटीरं गतवान् । कुटीरात् बहिः कश्चित् उपविष्टवान् आसीत् । तस्य हस्तौ न आस्ताम् । तस्य पार्श्वे कश्चित् लघुः वप्रः आसीत् । वप्रस्य उपरि कश्चित् मृद्घटः आसीत् ।

हस्तरहितः सः स्वसमीपम् आगच्छन्तं केशवं दृष्ट्वा सम्भ्रान्तः सन् चिबुकेन मृद्घटं पार्श्वे नुन्नवान् । तस्मात् मृद्घटे स्थितं क्षीरम् भूमौ पतितं सत् महाप्रवाहरूपेण केशवस्य दिशि एव अगच्छत् । क्षणाभ्यन्तरे तत् क्षीरं वृष्टिप्रवाहः इव



हस्तरहितस्य कुटीरं परितः यत् स्थलम् आसीत्, तत् आवृतवत् ।

केशवः सामान्यः मनुष्यः चेत् एतस्मिन् महाप्रवाहे निमग्नः अभविष्यत् । किन्तु अपूर्वशक्तिमत् वज्रं तस्य हस्ते आसीत् इत्यतः सः वायौ प्लवमानः एव हस्तरहितस्य समीपं गत्वा अवतीर्णः ।

एतस्मात् आश्चर्यचकितः हस्तरहितः मनुष्यः 'का एषा अपूर्वा विद्या ?' इति केशवं पृष्टवान् ।

केशवः वज्रं तस्मै दर्शयन् उक्तवान् - ''अपूर्वशक्तियुतस्य एतस्य वज्रस्य साहाय्येन सर्वं सिध्यति'' इति।

''मम मृद्घटं स्वीकृत्य मह्यं वज्रं ददातु भवान् । एषः मृद्घटः अपि अपूर्वशक्तिमान् एव । एषः पृष्टे सति आहारं दास्यति । एतस्य पातनेन प्रपञ्चस्य एव निमज्जनं कर्तुं शक्यते'' इति उक्तवान् हस्तरहितः मन्त्रवादी।

केशवः मन्त्रवादिनः वचनम् अङ्गीकृतवान् । सः वज्रं तस्मै मान्त्रिकाय दत्त्वा परशुताडनद्वारा मान्त्रिकं मारितवान् ।

केशवेन न केवलं वज्रं परशुः च, अपि तु अपूर्वशक्तिमान् मृद्घटः अपि सम्पादितः अभवत् । तस्यां रात्रौ केशवः तस्मिन् एव कुटीरे शयनं कृतवान् । अनन्तरदिने प्रातः उत्थाय आदिनम् अटन् सायङ्कालसमये किञ्चन अरण्यं प्राप्तवान् सः ।

तस्मात् अरण्यात् भयङ्करः शब्दः श्रूयते स्म । यस्मात् शब्दः श्रुतः, तस्यां दिशि केशवः गतवान् । तत्र कश्चित् राक्षसः उपविष्टवान् आसीत् । तस्य पुरतः पणवः आसीत् । सः राक्षसः केशवं दृष्ट्वा - 'रे ! भोजनार्थम् आगच्छतु' इति उक्तवान् ।

'भवतु' इति वदन् केशवः राक्षसात् दूरे एव उपविष्टवान् । राक्षसः केशवाय मांसं दातुम् उद्युक्तः । दर्शनेन एव तत् नरमांसं इति सन्देहः उत्पन्नः केशवस्य । सः राक्षसम् उद्दिश्य - ''अहं शाकाहारी अस्मि । मांसाहारं न खादिष्यामि'' इति वदन् मृद्घटतः आहारं स्वीकृत्य खादनम् आरब्धवान् ।

तत् दृष्ट्वा आश्चर्यचकितः राक्षसः पृष्टवान् - ''सः कीदृशः घटः ?'' इति ।

''एषः घटः अपेक्षितम् आहारं

ददाति'' इति उक्तवान् केशवः।

''तं घटं मह्यं ददातु। मदीयं पणवं भवान् स्वीकरोतु। एषः पणवः अपूर्वशक्तिमान् अस्ति। एतस्य एकं पार्श्वं ताडयति चेत् प्राणिनः भयात् धावन्ति। अपरं पार्श्वं ताडयति चेत् महत् सैन्यम् उत्पन्नं सत् भवन्तं रक्षिष्यति'' इति उक्तवान् सः राक्षसः।

केशवः राक्षसस्य वचनम् अङ्गीकृतवान्। अनन्तरं सः मृद्घटं राक्षसाय दत्त्वा पणवं स्वीकृतवान्, स्वपरशुना राक्षसस्य शिरश्छेदनं कृतवान् च।

वज्रं, परशुं, मृद्घटं, पणवं च स्वीकृत्य केशवः बहून् देशान् अटित्वा किञ्चन राज्यं प्राप्तवान्। तस्य राज्यस्य राजा दुर्विनीतः आसीत्। सः स्वप्रजाः मारयन् तदीयां सम्पत्तिं लुण्ठयति स्म। तत् राज्यं प्रति कश्चित् नूतनः आगच्छति चेदपि तं गृहीत्वा आनाययति स्म।

केशवः यदा तत् राज्यं प्रविष्टवान्, तदा तं ग्रहीतुं द्वादश भटाः आगतवन्तः। केशवः पणवस्य एकं पार्श्वं ताडितवान्। तस्मात् भीताः भटाः ततः पलायितवन्तः। एतां वार्तां श्रुत्वा राजा स्वसमीपे यावन्तः सैनिकाः आसन् तान् सर्वान् प्रेषितवान्। तदा केशवः मृद्घटं पातयित्वा प्रवाहम् उत्पादितवान्। तस्मिन् प्रवाहे सर्वे सैनिकाः लीनाः अभवन्। राजा एकः अवशिष्टः। केशवः राज्ञः समीपं गत्वा परशुत्सरुं ताडयित्वा 'शिरश्छेदनं करोतु' इति उक्तवान्।

शिरश्छेदनात् राजा मृतः जातः। एतस्मात् सन्तुष्टाः जनाः केशवं स्वराजं मत्वा तस्य पट्टाभिषेकं कृतवन्तः। अनन्तरं ते - ''इदानीम् अस्माकं राज्ये सैन्यं नास्ति खलु! अग्रे का गतिः?'' इति केशवं पृष्टवन्तः।

तदा केशवः पणवस्य अपरं पार्श्वं ताडितवान्। ततः महत् सैन्यम् उत्पन्नम्।

'महतः सैन्यस्य सृष्टिकर्ता राजा अस्ति चेत् देशस्य शत्रुभयम् एव न भविष्यति' इति चिन्तयन्तः मन्त्रिणः अतीव सन्तुष्टाः।



**चित्रशीर्षिका - स्पर्धा** * **पारितोषिकं १००/- रूप्यकाणि**

**विजितां शीर्षिकां जनवरी - १९९६ मासे प्रकटयिष्यामः ।**



Mahantesh C. Morabad



Mahantesh C. Morabad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

**प्रथमचित्रम् - चक्रपादुकां धृत्वा भ्रमणे लब्धकीर्तिरस्मि ।**

**द्वितीयचित्रम् - भ्रमरिकायाश्च भ्रामणे सिद्धहस्तोऽस्मि ।**

प्रेषकः - वि. सत्यनारायणमूर्तिः, १३-४-४(३), पद्मसालीवीथि - चेतनीपेटमार्गः, भीमवरम् - ५३४२०१




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---